राजवृत्तानुरोधेन न काव्यगुणवाञ्छया ।
सन्तः शृण्वन्तु मद्वाचः स्वधिया योजयन्तु च ॥
अथवा नृपवृत्तान्तस्मृतिहेतुरयं श्रमः ।
क्रियते ललितं काव्यं कुर्वन्त्वन्येऽपि पण्डिताः ।

und ähnlich III, 5—6

राज्यवृत्तानुरोधेन न काव्यगुणचर्चया ।
सन्तः शृण्वन्तु मद्वाचः स्वधिया योजयन्त्वपि ॥
कायस्थोक्तिवदेवेयं कृता स्मृत्यै भविष्यताम् ।
दृष्ट्वेदं ललितं काव्यं कुर्वन्त्वन्येऽत्र पण्डिताः ॥

Schwierigkeiten für das Verständniss bietet der Text im Allgemeinen nicht, wenn man nicht etwa eine hier und da sich darbietende besonders ungelenke Ausdrucksweise oder ein ungebräuchliches Wort dahin rechnen will, wie z. B. das weder bei Böhtlingk noch bei Apte aufgeführte rasāyu VIII, 41, dem bei Dschami eine „Nachtigall“ entspricht; ich habe es mit „Biene“ übersetzt und zwar mit Berufung auf eine Parallelstelle in Śrivara's Rājataraṅgiṇī III, 224, wo es heisst:

तत्पिकयेव राजेन्द्रः स सुन्दरगुणश्रिया ।
अविन्दत्परमानन्दं मालत्येव मधुव्रतः ॥

Nebenbei will ich hier bemerken, dass das aus dem textus simplicior der Śukasaptati bekannte divākīrti „Barbier“ bei Śrivara, Rājataraṅgiṇī II, 33 belegt und sonach über jeden Zweifel erhaben ist.

Nur eine Stelle im ganzen Kathākautukam hat mir grosse Schwierigkeiten bereitet, worüber noch eingehend zu reden ist, nämlich im ersten kāutukam Śloka 16—39, besonders aber 16—17. Grammatisch nicht unmöglich ist die Lesart, wie ich sie habe drucken lassen, ehe ich selbst über den Sinn dieser vier Zeilen ganz klar war. Danach wäre etwa zu übersetzen: „Dieser da,

Mahāmada mit Namen, das Stirnjuwel der Pāigambharās*), pflegte sich mit dem Khediven (Dschāmī) zu unterhalten (mit Liebesgeschichten), wiewohl er reinen Herzens war. Auf seinen Befehl hat der mächtige (Khedive Dschāmī) die Brücke der Frommigkeit geschlagen, auf Grund seiner Kenntniss der tiefsten Wahrheiten und ohne Verletzung des (Dharma-)Śāstra" (tattvabhāvān abhijñatvāt tathā-'śāstraviparyayāt). Bei dieser Uebersetzung ergeben sich aber verschiedene Unzuträglichkeiten, vor allem die, dass es nicht recht denkbar ist, der Perser Dschāmī habe auf Befehl des Fürsten von Kaśmīr, eben jenes Mahāmada, sein Gedicht verfasst! Des persischen Dichters Patrone waren vielmehr Abu Said und dann dessen Nachfolger Hussein Mirza Beikara, von denen uns hier nur der letztere angeht; denn unter dessen Regierung hat Dschāmī als Siebzigjähriger sein Gedicht von Joseph geschrieben. Trotz aller noch so zahlreichen und nahen Beziehungen zwischen Persien und Indien ist es denn doch wohl undenkbar, dass der Fürst von Kaśmīr dem so hoch gefeierten Dschāmī befohlen hätte, die Geschichte von Joseph zu einem Epos zu verarbeiten, zumal dieser Stoff dem Inder herzlich ungeläufig sein musste.

Hier bliebe nun freilich zunächst noch der Nothbehelf, anzunehmen, dass der Text an jener Stelle verderbt sei, das wäre doch aber mindestens recht auffällig, da das von mir benutzte Manuskript vollauf das Prädicat „im ganzen vorzüglich" verdient. Nein! Die Lösung aller Schwierigkeiten erfolgt, wie mir scheint, ungezwungen, wenn nur die Person des „Mahāmada" in Śloka 16 richtig bestimmt wird. Eine genaue Vergleichung des Sanskritgedichtes mit dem persischen Originalwerke lehrt nun, dass Śrīvara, wenn auch nicht Wort für Wort, so doch Abschnitt für Abschnitt der Einleitung, und zwar mit Beibehaltung der von Dschāmī gewählten Reihenfolge, übersetzt hat; und an der Stelle, wo er von ihr abweicht, nämlich bei der Lobpreisung Gottes, entschuldigt er sich damit, dass es althergebrachte Sitte der Dichter sei, den „Erhabenen" zuletzt zu feiern, nachdem sie das eigentliche Gedicht beendet hätten: I, 14—15:

---

*) Diese erscheinen später im Kathās° IV, 51 und Rājataraṅgiṇī III, 1[illegible] als Pāigambaras.

किं तु पूर्वमपूर्वं यत्परं योगनिरूपणम् ।
कृतं मनीषया तेन तदन्ते कथ्यते मया ॥
सर्वत्रायं क्रमः पूर्वं शृङ्गाररससंयुताम् ।
अभिधाय कथां पूर्वैः शान्तोऽन्ते परिकीर्तितः ॥

Wenn wir also das im Auge behalten, dann kann kein Zweifel mehr obwalten, dass mit dem Mahammada in Śloka 16 niemand weiter gemeint sein kann als der **Prophet Muhammed**, den Dschâmi an der entsprechenden Stelle mit allem Ueberschwange eines Gläubigen feiert. Auf diese Weise erhalten wir nun die ansprechendere, wenn auch nicht ganz zwanglose Uebersetzung, die ich gewählt habe und bei der es gewiss nichts ausmacht, dass Śloka 17 allerdings zerrissen wird; das ist doch aber wenigstens kein durchaus verpönter Fehler, vergl. X, 29, 30! Dass Śrîvara den Propheten zu einem Gliede der Paigambaras und Dschâmi zu einem Khediven macht, erklärt sich leicht als Schmeichelei; es ist bei solchen Gelegenheiten nun einmal Sitte, den Mund etwas voll zu nehmen, und niemand wird sich dabei der Mühe unterziehen, derartige Angaben auf ihre Richtigkeit hin zu prüfen, so wenig wie es jemandem einfallen wird, etwa den Stammbaum Jesu kritisch zu untersuchen.

Da überdies die Lobpreisung des Propheten mystisch dunkel gehalten und voller Schwierigkeiten für das Verständniss ist, so können wir es Śrîvara nachfühlen, wenn er darauf verzichten will, ein mâhâtmyam des Propheten zu geben, „da er den wahren Sachverhalt nicht kennt“ — tattvabhâvânabhijñatvât — und ausserdem hat er als Inder noch einen sehr stichhaltigen Grund für diesen Verzicht, weil ja auch sein Buch ein anderes ist (tathâ śâstraviparyayât)*)! Dagegen feiert er nun den Fürsten, der jenes, nämlich Muhammed's Namen trägt (tannâmno mahîpateḥ), also den Kaśmîrfürsten Mahamada, der in Śrîvara's Râjataraṅgiṇî bald als Mahmada, bald als Mahammada erscheint. Es ist das der dritte Herrscher nach Zain ul Âbidîn oder wie ihn die indischen Historiographen

*) Oder: weil (die Verherrlichung des Propheten) dem (indischen) Lehrbuche (der Frömmigkeit) widerspricht.

den ausschlaggebenden Beweis für die Identität der Verfasser derselben.

Was nun meine Ausgabe ihrer äusseren Form nach anlangt, so habe ich die Schreibweise des von mir benutzten Śāradā-Manuskriptes aus Puna beibehalten, die Devanāgarī-Copie desselben (Rājendralālamitra Notices VIII 2585), habe ich — als sehr fehlerhaft — nicht verglichen. Ich habe darüber schon in meiner oben erwähnten Abhandlung über das Kathākautukam gesprochen.

Für unermüdlich geleistete Hilfe bei der Durchsicht des Manuskriptes und ebenso willkommene Unterstützung bei dem Correcturlesen bin ich Herrn Dr. Joh. Hertel in Zwickau zu aufrichtigstem Danke verpflichtet, ebenso Herrn Privatdocent Dr. R. Simon in München, der mir seinen geschätzten Rath bereitwilligst gegeben hat, und endlich — last not least — Seiner Lordschaft, dem Unterstaatssekretär für Indien, für den von ihm gespendeten Beitrag zu den Druckkosten. Ihnen Allen auch öffentlich zu danken ist mir eine angenehme Pflicht.

Eisleben, den 12. März 1898.

Richard Schmidt.

मानन्दा हृदये विलोक्य विशदं यच्छुक्लशङ्खोपमं
मन्यन्ते भुवनाधिपत्यमखिलं योगेन योगीश्वराः ।
ध्यात्वाप्येकनिमेषमात्रमपि यत्सौख्यं सदा प्राप्यते
वन्दे सिद्धसुरेन्द्रवन्दितमहत्तेजः परं शाम्भवम् ॥ १ ॥
प्रणम्य विघ्नौघहरं गणेशं त्रिधामरूपामपि भारतीं ताम् ।
विरच्यते यावनशास्त्रबद्धा कथा मया निर्जरभाषयेयम् ॥ २ ॥
क्रमेण येन भौतार्थो मल्लाख्यानेन वर्णितः ।
तेनैव हि मया सोऽयं श्लोकेनात्र निरूप्यते ॥ ३ ॥
प्रबोधशाखाकलिकां प्रमादमधुना प्रभो ।
तदुत्पन्नेप्सितफलं दातुमर्हसि मे शुभम् ॥ ४ ॥
शोभितं कुरु तेनैव मानसोद्यानमङ्ग मे ।
तत्सौगन्ध्येन शुद्धेन शरीरं परिपूरय ॥ ५ ॥
असारे खलु संसारे चिन्ताजलसमाकुले ।
अज्ञानान्धस्य देवेश प्रकाशं मे निदर्शय ॥ ६ ॥
मनो मेऽस्तु सदा शम्भो भवत्सेवापरंपरम् ।
वक्तुं गुणगणं नित्यं रसनेयं प्रवर्तताम् ॥ ७ ॥
नेत्राभयच्चिकायास्तु शुभयाग्योगमद्भुतम् ।
मल्लां देहि भक्तेन कार्यसिद्धिस्तु यावहा ॥ ८ ॥

---

1a विरहे          2a भारती

तुलयन्वाक्यरत्नानि हृत्कोशान्मम भारती ।
भवद्भक्तितुलारोहे सुवर्णार्थान्विता भवेत् ॥ ९ ॥
स्थैर्यं हि जगतो नैव दृश्यते वचनं विना ।
शम्भुभक्तियुतं तच्चेच्छोभते साधुपूजितम् ॥ १० ॥
पुण्यं शास्त्रामृतं पीत्वा यातास्ते हि कवीश्वराः ।
निधाय विपुलां कीर्तिं सुस्थिरां भुवनत्रये ॥ ११ ॥
नावशिष्टः कविः कश्चित्तेषां यो ऽद्यतनान्भवेत् ।
क्षमः शिक्षयितुं स्वल्पकाव्यशक्तियुतान्स्वयम् ॥ १२ ॥
तस्मादेह्यधुना कालं गतिं वीक्ष्य शुभाशुभाम् ।
काव्यं यद्यस्ति ते शक्तिर्विधातुं कुरु सत्वरम् ॥ १३ ॥
किं तु पूर्वमपूर्वं यत्परं योगनिरूपणम् ।
कृतं मनीषया तेन तदन्ते कथ्यते मया ॥ १४ ॥
सर्वत्रायं क्रमः पूर्वं शृङ्गाररससंयुताम् ।
अभिधाय कथां पूर्वैः शान्तो ऽन्ते परिकीर्तितः ॥ १५ ॥
यो ऽयं महामदो नाम पैगम्बरशिरोमणिः ।
कृतालापः स्वदेवेन सह शुद्धाशयो ऽपि सन् ॥ १६ ॥
तदाज्ञयैव संबद्धधर्मसेतुर्महाबलः ।
तत्त्वभावानभिज्ञत्वात्तथाशास्त्रविपर्ययात् ॥ १७ ॥
माहात्म्यं वक्तुमेवास्य विचारनिरतः परम् ।
न समर्थो ऽस्म्यहं तत्र संशयाकुलिताशयः ॥ १८ ॥
तस्मात्संशयितं किंचिद्दोषायैवोपकल्पते ।
माहात्म्यं किं तु तन्नाम्नो वक्ष्यते ऽद्य महीपतेः ॥ १९ ॥

जीयान्महामदः शाह्निर्धर्मास्तवरगर्वितः ।
श्रीमान्कश्मीरभूपालः फुल्लराजीवलोचनः ॥२०॥
यदेतन्निर्मितं धात्रा जगत्स्थावरजङ्गमम् ।
भवाभिधानं नानार्थं नरदेहवदद्भुतम् ॥२१॥
तन्महामदभूपेन सर्वभूपालमौलिना ।
अधुना शोभितं सम्यङ्नयनेन वपुर्यथा ॥२२॥
को हि वक्तुं नृपस्यास्य महिमान कवीश्वरः ।
शक्तो यस्य यशश्शुभ्रं पूरयित्वा महीमिमाम् । ॥२३॥
बलेनैव नभोनीथं छित्वा ब्रह्म दिवं वियत् ।
सरन्ध्रं सर्वतो जातं तेन ताराभ्रमो वृथा ॥२४॥ युगलकम् ॥
सदा धर्मधृतोपाया हृतापायास्सुकर्मभिः ।
देवप्रायाः प्रजाः प्रायो यस्मिञ्शासति मेदिनीम् ॥२५॥
अवाची दिशमाश्रित्य दिनेशोऽपि हृतप्रभः ।
जाता यस्य विजित्या तां तेजोवृद्धिर्न तत्क्षयः ॥२६॥
दृश्यते वैरिनिकरैर्भीमार्जुनसमो रणे ।
योऽयमर्थिगणैर्दाने कर्णाधिकगुणस्सदा ॥२७॥
तथैव ललनाभिर्यः कन्दर्पो मन्यते रतौ ।
मन्त्रिभिर्मन्त्रकरणे गुरुकाव्योत्तमोऽनिशम् ॥२८॥
*तेजसोऽर्धं स्वकं दत्वा यस्मै प्रीत्या हरिस्स्वयम् ।*
यातस्तेनास्तमेवासौ पूर्णधामा दिवानिशम् ॥२९॥
प्रीत्यै तु गोसहस्रस्य येन धर्मपरेण च ।
ज्ञात्वा पूर्वपदैर्वैवं वधाद्गावो विमोचिताः ॥३०॥

योऽयमिन्द्राधिकस्सर्वगुणैर्नाम्ना शचीपतिः ।
शतमन्युरिव ख्यातः शान्तक्रोधो महेश्वरः ॥३१॥
जित्वा शत्रून्रणे त्यक्तवैरस्तत्पुररञ्जकः ।
योऽयं पुरन्दरो बद्धक्रोधो देशविदारणात् ॥३२॥
दग्ध्वा वैरिकुलाटवीं सुविततां व्योमेति दृष्टिं दृढां
शून्ये शब्दगुणे स्वयं वितनुते तद्धूमसङ्गेन यः ।
भानुर्भाति च विस्फुलिङ्ग इव तन्मध्येऽपि यस्याधुना
शक्तास्ते कविशेखराः कवयितुं को वा प्रतापानलम् ॥३३॥
हस्ताम्भोजालिमालेव नखाब्जहरिणच्छविः ।
दानकुञ्जरगण्डोत्थमदधारेव निर्गता ॥३४॥
पराक्रमह्रदोत्पन्नबालशैवालवल्लरी ।
ज्वलत्प्रतापकृतभुग्धूमरेखानुकारिणी ॥३५॥
राजते वैरिललनावेणीबन्धाकृतिः करे ।
यस्यैवासिलता वल्गत्सन्नलाम्भोधरद्युतिः ॥३६॥ तिलकम् ॥
प्राज्ये जाग्रति राज्येऽस्य पृथिव्यां पृथिवीपतेः ।
शाके मुनिद्विवेदेन्दुगणिते विक्रमोष्णगोः ॥३७॥
स्थितेऽपि लौकिके वर्षे चन्द्राष्टपरिपूरिते ।
माधवे मासि राकायां रवौ मेषमुपागते ॥३८॥
महाज्योमिन योसोभट्टोलिखानामविश्रुतः ।
रचितोऽप्यद्भुतः पूर्वं ग्रन्थो देवमुखोद्गतः ॥३९॥
तस्मिन्मया पण्डितजोनकाख्यं नत्वा गुरुं पण्डितश्रीवरेण ।

39a वेसोफ.

भूपालतुष्ट्यै सुरलोकवाण्यारम्भोऽधुनाकारि मनोहरोऽयम्
॥४०॥ चक्कुलकम् ॥

विद्वन्मानससच्छास्त्रकुमुदानन्दकारकः ।
लीलाज्ञानघनध्वान्तध्वान्तस्वान्तप्रकाशकृत् ॥४१॥
सत्यसन्धो जितक्रोधो द्विजमण्डलनायकः ।
ब्रह्मण्यो ऽथ सदाचारस्सदा भूपालपूजितः ॥४२॥
शान्तो ऽनन्तगुणस्सर्वश्रुतिस्मृत्यर्थपारगः ।
सन्ध्यास्नानरतः शिष्यचकोरगणसम्मतः ॥४३॥
गुरुरिव सभामध्ये दृष्टो गुरुगणान्वितः ।
. . . . . . . . . . . . . . ॥४४॥
गुरुर्योत्स्नाकराख्यो मे सततं वाक्सुधाकरः ।
आसीद्भुवि भवे भक्तो विभवी यशसान्वितः ॥४५॥
॥ पञ्चभिः कुलकम् ॥

जयन्तु संततं सन्तस्सन्तोषविशदाशयाः ।
परोपकारकरणे सदा बद्धधियो ऽपि ये ॥४६॥
गुरुं परगुणं ज्ञात्वा स्वयं साध्विति वादिनः ।
न्यूने चोपस्कृतिपराः क्वचिन्नोपहसन्ति च ॥४७॥ युगलकम् ॥
तस्मान्न सज्जनभयं कवीनां जातु जायते ।
सदन्यसारमेयानां भषणैः किं भविष्यति ॥४८॥
इति ज्ञात्वा रसमयं कथाकौतुकसंज्ञितम् ।
श्रीवराख्यो बुधो नूनं प्रबन्धं साधयाम्यमुम् ॥४९॥

---

46a °विशदाशया.

नास्ति लोके परं किंचिच्चित्तरागं विनापरम् ।
तत एव हि वैराग्यं जायते सुखदं पुनः ॥५०॥
चित्तासक्तिवशेनैव स स्वयं भगवाञ्छिवः ।
शक्त्यैव सक्तसङ्गस्य सर्वमेतदवासृजत् ॥५१॥
द्वित्वहीनेऽप्यनिर्देश्ये जगन्नामविवर्जिते ।
कैवल्ये केवलं तस्मिन्नासीदेको महेश्वरः ॥५२॥
नानारूपमयं दिव्यं सर्वलावण्यसंयुतम् ।
अनेककौतुकाकीर्णमनवद्यमनश्वरम् ॥५३॥
पश्यन्नेवात्मनात्मानं स्वधामादर्शमण्डले ।
समयेऽस्मिन्स देवेशो बभूवानन्दनिर्भरः ॥५४॥
कस्मैचिद्दर्शयाम्येनमवचिन्तान्वितः शिवः ।
तावदिच्छा समुत्पन्ना प्रादुर्भूतास्य मोहिनी ॥५५॥
रूपस्यापह्नवं कर्तुं न शक्तो रूपवान्सुखम् ।
तमोहरे निरुद्धे तु द्वारि सन्दर्शयिष्यति ॥५६॥
स्थलारविन्दं पश्यैकं गुप्तं भूमौ स्वमस्तकम् ।
समाकर्षति सौन्दर्यगुणेनैव कथं मधौ ॥५७॥
इच्छाशक्त्याथ सङ्गस्य रागेणाप्याश्रिताशयः ।
स हि देवो महादेवः तन्मयं व्यसृजज्जगत् ॥५८॥
विधाय विविधां सृष्टिं स्वकीयांशयुतां ततः ।
कुर्वन्रागमयीं लीलां विभात्यस्यां स्वयं विभुः ॥५९॥
तेनेच्छया जगत्सर्वं रचितं यच्चराचरम् ।
रागेणापि न तज्जातु विराग जायते क्वचित् ॥६०॥

रागेणैव तदा देवीत्रयं सृष्ट्वात्ममायया ।
त्रीनिव पुरुषांल्लोके हेतुभूतान्स्वदेहतः ॥६१॥
तदारमत तैस्सार्धं यथेष्टं बहुवत्सरान् ।
ततोऽमी तदनुज्ञाताः पुनस्सर्गमथासृजन् ॥६२॥
तस्माद्रागमयं सर्वं चेतनाचेतनं जगत् ।
प्रतिभात्येव यत्तेन रहितं तन्न गण्यते ॥६३॥
दृष्ट्वाचेतनं वह्नरागं धर्मरुचाम्बुजम् ।
सुधांशुना च कुमुदं तत्सिक्ताः किं न मानवाः ॥६४॥
चित्तासक्तिरतिं वक्तुं न हि शक्तो नरः पराम् ।
तत्सहस्रं न चेदेकजिह्वयैव समन्वितः ॥६५॥
तदेव हि शुभं तस्माद्यत्किंचिद्रसनिर्णयम् ।
करोत्यन्यदतस्सर्वं नीरसं कथितं बुधैः ॥६६॥
यदि चित्तं भवेद्रागव्यथाहीनं न तन्मनः ।
तनुस्तत्पीडया त्यक्ता न सा मृद्धारिणा विना ॥६७॥
विवृत्य वदनं लोकात्तत्रार्पय मुखं मुदा ।
संयोजनाधिकः प्रोक्तो रागो हर्षाय रागिणाम् ॥६८॥
तच्चिन्ता हृदि सर्वेषां न्यूना मा भूत्कदाचन ।
मनो मनस्विनां तेन विहीनमपि जातु चित् ॥६९॥
चक्रवत्तद्वशेनैव गगनं परिवर्तते ।
कोलाहलेन तस्यास्ति लोकोऽयं परिपूरितः ॥७०॥
तस्य दासत्वमाश्रित्य विमुक्तो भवबन्धनात् ।
तद्रीतिं हृदये धृत्वा सुखं प्राप्नोति शाश्वतम् ॥७१॥

रागासवं निपीयेव मदमानो नरस्तथा ।
लोकावृत्तिलयास्सर्वं वेत्तीदं तृणवत्यथा ॥७२॥
रागिणो रागचपकान्न पिबन्ति स्म चेज्जनाः ।
सरकं नाम गृह्णीयात्तेषां कोऽपि न कुत्रचित् ॥७३॥
धनिनो रूपवन्तश्च शतशोऽथ सहस्रशः ।
चिरायुषोऽपि पर्यन्ते निमग्ना भववारिधौ ॥७४॥
नावशिष्टं तु तन्नाम किंचित्सत्यं पुनः क्षितौ ।
सुखाविह परत्रापि कथा नित्यैव रागिणाम् ॥७५॥
श्रुतमेतत्पुरा कश्चिच्छिष्यो दीक्षां मुहुर्मुहुः ।
मह्यं देहीति भगवन्विज्ञप्तिं गुरवेऽकरोत ॥७६॥
स च तेन ततः पृष्टो यदि रागान्वितं मनः ।
तव कुत्रापि संजातं ततो दीक्षां ददामि ते ॥७७॥
यावन्न मातृकापाठं प्रकरोति नरः क्वचित् ।
वेदशास्त्रार्थकुशलः तावद्भवति मूढधीः ॥७८॥
त्यक्त्वा लोकभयं रागप्रीतिं कुरु दिवानिशम् ।
कृत्वास्य निर्णयं जन्तुर्मुनिं प्राप्नोत्यसंशयम् ॥७९॥
दिष्ट्या दैवेन संसारसंभूतभयवर्जितः ।
त्यक्त्वान्यकरणीयं तन्मार्गेऽहं संप्रवेशितः ॥८०॥
यदि मे मूर्धजा दुग्धसवर्णत्वसमागताः ।
तथापि मानसे रागः प्रत्यहं तरुणायते ॥८१॥
एकदा पथि गच्छन्तं स्वेच्छया केवलं शनैः ।
प्रादुर्भूता नभोवाणी मामवोचन्मुहुर्मुहुः ॥८२॥

एकं रसमयं शीघ्रं प्रबन्धं कुरु साम्प्रतम् ।
यं श्रुत्वा मुनिवर्गोऽपि भवेत्कामविमोहितः ॥ ८३ ॥
असारे खलु संसारे न किंचिदवशिष्यते ।
तस्माच्छास्त्रकथा लोके स्थिरा कल्पशतानि ते ॥ ८४ ॥
इति श्रुत्वा वचो दिव्यं विचार्य च पुनः पुनः ।
ज्ञात्वा शुभं रसाख्यानं कृतमद्य मयाद्भुतम् ॥ ८५ ॥
सन्दीप्तः क्रियते रागवह्निर्यस्योष्मतापितः ।
पतन्ति गगनात्तारा निर्झराव्यस्त्रबिन्दवः ॥ ८६ ॥
दृश्यते सकलं विश्वं भारतीवशगं पुनः ।
सा चेद्वक्ति कथं मौनं कुर्याद्बुद्ध्या हि संश्रितः ॥ ८७ ॥
वच एव हि सर्वस्य प्रमाणं परिकीर्तितम् ।
तदेव मधुरं चेत्स्यान्नास्त्यन्यल्लाभकारणम् ॥ ८८ ॥
यदेतद्दृश्यते सर्वं पुराणमथवा नवम् ।
वचनाद्धि सम्भूतं नात्र कार्या विचारणा ॥ ८९ ॥
कुरु मार्गं यथा पूर्वमिति श्रुत्वा वचोविधिम् ।
वचनाद्देवदेवस्य चक्रे सर्वं समाहितः ॥ ९० ॥
वेदस्मृतिपुराणानि तर्कव्याकरणानि च ।
वचनेन निबद्धानि तस्माद्वाक्यमयं जगत् ॥ ९१ ॥
सत्यासत्यतया वाक्यं द्विधा तत्कथितं बुधैः ।
सूनृतं दुर्लभं लोके सर्वत्रैवेतरद्वचः ॥ ९२ ॥
एतद्दते परो धर्मो नास्ति कश्चित्प्रियः शुभः ।

90a वचोविधि 92c सूनृत

नित्यं सत्यं प्रवक्तव्यं सर्वसिद्धिमभीप्सता ॥ १३ ॥
भूषणं द्वयमेवास्य सत्यताप्यल्पभाषणम् ।
क्षमा शीलं यथा लोके पुरुषस्य सुमेधसः ॥ १४ ॥
अधुना तद्द्वयोपेतः प्रबन्धो रससंयुतः ।
रागिणां वल्लभस्सोऽयं सतां भवतु प्रीतये ॥ १५ ॥

इति यवनशास्त्रपारङ्गमपण्डितश्रीवरविरचिते
कथाकौतुके प्रथमं कौतुकम् ॥

॥ १ ॥

अभूदनेकभूपालमौलिलालितशासनः ।
प्रतीच्यां विक्रमोदारस्तैमोसाख्यः क्षितीश्वरः ॥ १ ॥
यद्बाहुबलमाश्रित्य सदा सागरमेखला ।
मेदिनी मोदिता सर्वसम्पत्तिसहिता परम् ॥ २ ॥
प्रणामसमये नित्यमुपर्युपरि भूभुजाम् ।
पततां मुकुटैर्यस्य भाति मौलिमयं वपुः ॥ ३ ॥
न धर्मात्सुखदं किंचिज्ज्ञातं तद्धर्मचेतसः ।
कालतो जायते यस्य न भयं का कथारिणाम् ॥ ४ ॥
यन्नामनि श्रुते गर्भाः पतन्त्यहितयोषिताम् ।
नाधिव्याधिभयं लोके यस्मिञ्शासति मेदिनीम् ॥ ५ ॥
शीलेखा नाम तनया तस्याभूत्सुमनोरमा ।
कविः कथयितुं को वा यद्रूपं शक्तिमान्भवेत् ॥ ६ ॥
यथामति विधातव्ये तदीये रूपनिर्णये ।

---

13 a सर्वसिद्धिमभीप्सता 2 a यदा.

तेनेयं रसनान्वर्थनामधेयाभिज्ञायते ॥७॥
श्यामा कुरङ्गनयना तनुमध्यभागा
सम्पूर्णचन्द्रवदना पिकवाग्विलासा ।
विम्बाधरा गजगतिः स्तनभारनम्रा
मुक्तानुकारदशना नृपकन्यका सा ॥८॥
अलकावलिभिस्तस्याः शुशुभे वदनं शुभम् ।
निधानमिव सम्पूर्णं त्रातं राजिलराजिभिः ॥९॥
दृष्टमत्यद्भुतं तस्यां द्वयमात्मविरोधकृत् ।
अक्ष्णो मुखस्वरूपोत्थं तमी च कचसम्भवा ॥१०॥
वक्षोजौ नीरजसमौ सुवृत्तौ सूक्ष्मरूपिणौ ।
लावण्यसागरोद्भूतौ कार्पूराविव बुद्बुदौ ॥११॥
न द्रवद्गजतं साम्यं भुजयोर्हिमसन्ततिः ।
नाकरोद्बिसिनीकाण्डो रन्ध्रयुक्तो मृगीदृशः ॥१२॥
तारहारावलिः कण्ठे कम्बुकण्ठ्या विराजते ।
सेवितुं मुखशीतांशुं प्राप्ता नक्षत्रसन्ततिः ॥१३॥
कथं निर्मलता तस्या वर्ण्यते हरिणीदृशः ।
यां दृष्ट्वा श्वासव्याजेन मालिन्यं दर्पणं ययौ ॥१४॥
यया ते विजिता गत्या हंसा बालमृगीदृशा ।
मध्यभागेन हरयो वनमेव समाश्रिताः ॥१५॥
यां दृष्ट्वाप्सरसश्चक्रुर्नैव नेत्रनिमीलनम् ।
न पुनर्दर्शयामासुश्शरीरं स्व घृणातुराः ॥१६॥

11a नीरज सुवृत्तौ

तादृशा जीवलोकेऽस्मिञ्श्रुतपूर्वा न वीक्षिता ।
रूपलावण्यसंयुता दुर्लभा रसनायिका ॥१७॥
श्रुत्वाद्भुतं रूपमती वयस्याः पिधाय कर्णौ खलु नागकन्याः।
निमीलयन्त्यो नयनानि सर्वाः पातालमासाद्य न निर्ग-
तास्ताः ॥१८॥
सदा पद्मालया पद्मा जलजं कथमाश्रिता ।
नूपुरव्याजमाश्रित्य यत्पादाम्बुजमागता ॥१९॥
येनेदं रचितं विश्वं वेधसाद्भुतकर्मणा ।
स एव वक्तुं तद्रूपं शक्तो भवति नापरः ॥२०॥
एवं सा नृपतेः कन्या वसन्ती राजमन्दिरे ।
सखीगणवृता नित्यं पाञ्चालीकेलितत्परा ॥२१॥
सौधसंस्थां सदा वायुस्सेवितुं सुखशीतलः ।
वाति नैव रविश्चन्द्रः करैः स्पर्शमवापतुः ॥२२॥
विष्णुमाया यथा नाम विश्रुता दृष्टिगोचरा ।
मोहयत्येवमखिलं तथा सा नृपकन्यका ॥२३॥
एवं वसन्त्याः कन्याया अन्तर्वर्तिन्यलक्षिता ।
जनयिष्यति यत्तस्याः कालमाया शृणुष्व तत् ॥२४॥
इन्द्राद्यास्सकला देवा मोहिता यस्य मायया ।
नमस्तस्मै भगवते पराय परमात्मने ॥२५॥
एकदा केलिविश्रान्ता जालिया निद्रिताभवत् ।
प्रसाधिकाङ्के पादाब्जयुग्मं न्यस्य निशामुखे ॥२६॥

17a गादृशे

अभूत्सा तादृशी रात्रिः सुखयुक्ता शरीरिणाम् ।
यस्यां तु निद्रिता लोका न प्राज्ञायन्त किंचन ॥२७॥
चञ्चच्चञ्चुपुटा यस्यां चकोरा मोदिताशयाः ।
पिबन्तश्चन्द्रिकां रम्यां कुर्वन्तो मधुरं स्वरम् ॥२८॥
न हि कश्चित्प्रबुद्धोऽभूद्रजनीरमणं विना ।
गतिस्सदागतेर्यस्यां न परस्यापि कस्यचित् ॥२९॥
स्वप्नसंयुक्तमनसस्सर्वे प्राहरिकास्तदा ।
प्रतीहाराश्च सौवर्णवेत्रेषु धृतमस्तकाः ॥३०॥
आसन्ह्रदास्सुतमीनास्सारसारववर्जिताः ।
एक एव वराकोऽभूच्चक्रवाकोऽतिकातरः ॥३१॥
सुखसुप्ता निरीक्षन्ती सुशीलाङ्गं रविप्रिया ।
कृत्वा कमलिनी पद्ममध्ये मधुपबालकम् ॥३२॥
एवं सा नृपतेः कन्या रूपशीलसमन्विता ।
शयाना रत्नपर्यङ्के कुसुमास्तरणे शुभे ॥३३॥
ततोऽद्भुतगुणा बाला निद्रिता चर्मचक्षुषा ।
किं त्वन्तःकरणेनेयं प्रबुद्धेवाभवत्तदा ॥३४॥
अर्धरात्रे गते सुप्तजने कंचिच्छुचिस्मिता ।
प्रविशन्तं गृहद्वारात्स्वप्नेऽपश्यन्नृपात्मजा ॥३५॥
सुमस्तकं सुन्दरभालदेशं सुभ्रूविलासं शुभपक्ष्ममालम् ।
सुलोचनं शुद्धकपोलभागं सुनासिकं हास्यमनोहरास्यम्
॥३६॥

सुचारुवदनं रम्यग्रीवं सिंहांसमद्भुतम् ।

पीनोरस्कं महाबाहुं सुकुमारं सुवाससम् ॥ ३७ ॥
काकपक्षधरं श्यामं रोमराजिविराजितम् ।
सुनाभिं समगुल्फं च सुचारुचरणाम्बुजम् ॥ ३८ ॥
चन्दनेनोपलिप्ताङ्गं वरताम्बूलधारिणम् ।
सर्वलक्षणसंपूर्णं सुशोभितशरीरकम् ॥ ३९ ॥
शोभानिर्जितशीतांशुं प्रभास्तमितभास्करम् ।
सभावृहस्पतिसमं प्रभावाद्भुतदर्शनम् ॥ ४० ॥
अनङ्गतोद्धतं दोपं संप्रमार्ष्टुमुपागतम् ।
साक्षात्काममुपादाय तनुं मोहयितुं जगत् ॥ ४१ ॥
अदृष्टपूर्वं नो जातु गतं श्रुतिपथं क्वचित् ।
अनुभूतं न मनसा परं सुरसुतोपमम् ॥ ४२ ॥
हृत्वा चैतन्यसर्वस्वं कृत्वा चिन्तातुरं मनः ।
दर्शयित्वा निजं रूपं निर्गतं तद्गृहात्पुनः ॥ ४३ ॥ कुलकम् ।
दृष्ट्वाद्भुततरं भावं स्वप्ने सत्यफलप्रदे ।
पुलकाङ्कितसर्वाङ्गा ध्यायन्ती तं हृदि स्थितम् ॥ ४४ ॥
भीता सा नृपतेः कन्या हरिणीहारिलोचना ।
प्रबोधमागता यावत्तमी तावदुपारता ॥ ४५ ॥
प्रभातप्रायां रजनीं विलोक्यानन्दनिर्भराः ।
दासीगणयुतास्सख्यो विचित्राभरणाम्बराः ॥ ४६ ॥
सौम्यातिवयस्समायाताः सेवितुं तां नृपात्मजाम् ।
हसन्त्यश्चैव गायन्त्यः पञ्चमं स्वरमद्भुतम् ॥ ४७ ॥

---

43b [illegible] st कृत्वा

प्रबुद्धा सा रवौ व्योमनीलनीरङ्गिकान्तरात् ।
सौवर्णाण्डोपमे कालकुक्कुटेन निदर्शिते ॥४८॥

व्योममानसतारौघहंसश्येनायिते रवौ ।
विनष्टा भूपतनया निद्रा दृष्ट्वाद्भुतं ततः ॥४९॥

प्राचीमस्तकसंलीने सुवर्णकलशोपमे ।
भास्करेऽभ्युदिते तावत्प्रबुद्धा सा नृपात्मजा ॥५०॥

उत्थिता शयनाद्यावत्तावत्सर्वस्सखीजनः ।
विधाय प्रणतिं सेवारम्भं चक्रे समाहितः ॥५१॥

काचित्सज्जं विधायाशु कज्जलं हरिणीदृशः ।
समानिनाय पुरतो नयने तेन चाञ्जयत् ॥५२॥

काप्यङ्गरागमादाय मृगनाभिपरिष्कृतम् ।
तस्यास्सम्भावयामास शरीरं तेन सुन्दरम् ॥५३॥

काचिद्बबन्ध सुदृशो वस्त्राण्याभरणानि च ।
काचिद्धारावलिं कण्ठे निष्कं काचिन्मनोहरम् ॥५४॥

काचित्कटककेयूरान्काचित्ताम्बूलमुत्तमम् ।
समानीय पुरस्तस्याश्चक्रे भूषां मनोरमाम् ॥५५॥

विहितेऽत्यद्भुते तस्या भूषणे भूषणोत्तमैः ।
तावद्दर्पणमादाय सखी काचिदुपागता ॥५६॥

अपश्यद्दर्पणे बाला स्वमात्मानं सुभूषितम् ।
न पुनस्तं पतिं कान्तं स्वप्ने दृष्टं हृदि स्थितम् ॥५७॥

सखीभिस्सहिता क्रीडोद्यानमेवाविशत्ततः ।
विचिन्वन्तीव तं तत्र हृदि मग्नं सुरोपमम् ॥५८॥

तदुद्यानं हिमाम्भोभिर्लतापत्त्रावलम्बितैः ।
सक्तिं शुशुभे तावन्मौक्तिकैरिव सर्वतः ॥५९॥
नानावृक्षसमाकीर्णं सदा पुष्पोपशोभितम् ।
सर्वर्तुगुणसंयुक्तं द्विजालिकुलनादितम् ॥६०॥
सारसाः कलनिर्ह्रादाः क्वचित्कोकिलनिस्स्वनः ।
क्वचिन्मधुकराराक्स्तत्रासीत्सुमनोहरः ॥६१॥
प्रातःफुल्लारविन्देभ्यो निर्गच्छन्तो मधुव्रताः ।
व्रजेन भयदास्तासां नाराचा इव मान्मथाः ॥६२॥
क्रीडन्त्यो विविधैर्भावैर्हसन्त्यश्च परस्परम् ।
ताः पुष्पावचयं कृत्वा जगुस्तस्याः पुरस्सदा ॥६३॥
सापि राजेन्द्रतनया तदालापपरा मुदा ।
स्वप्नालोकितजीवेशसम्भाषणरताभवत् ॥६४॥
ताभिर्विरचिता मालाः पश्यन्ती बाह्यचक्षुषा ।
किं तु हृत्पद्ममध्ये तं स्थितं सत्येन सुन्दरम् ॥६५॥
मिथ्या क्रीडारसपरं ताभिस्तन्मानसं मुदा ।
परं तद्ध्यानसंलीनमभवत्सुखसंयुतम् ॥६६॥
इति चिन्तयती बाला तन्मनस्का सुमध्यमा ।
किं दृष्टं विधिवैचित्र्यं केन मेऽपहृतं मनः ॥६७॥
द्रक्ष्यामि वा पुनः कान्तं तदीयं मुखपङ्कजम् ।
विलोचनयुगं यत्र मदीयं भ्रमरायितम् ॥६८॥
अज्ञातवसतिं कान्तं स्वप्ने कस्माद्विलोकितम् ।
अनुक्तनामधेयं तं कथमन्वेषयाम्यहम् ॥६९॥

एवं चिन्तातुरा बाला चित्रसंस्थेव तत्र सा ।
ध्यायन्ती तं पतिं तावद्दिवसोऽस्तमुपाययौ ॥७०॥
सुखिनां सुखदा नित्यं हास्यक्रीडादिवस्तुभिः ।
निद्रया दुःखितानां च शोकविस्मृतिकारिणी ॥७१॥
प्रादुर्भूता ततो रात्री रात्रीशकररञ्जिता ।
कुर्वन्ती द्विगुणां चिन्तां तस्या बालमृगीदृशः ॥७२॥
तस्यां रात्रौ पुनर्बाला भूपतेः कन्यकातुरा ।
अकरोद्विप्रयोगेन करुणाक्रन्दनं परम् ॥७३॥
सत्यं तद्विरहोद्भूतश्वासैरेव समन्ततः ।
भिन्नं ताराच्छलेनेदं सच्छिद्रं मन्यते नभः ॥७४॥
तनुवीणां समादाय नाडीतन्त्रीसमाकुलाम् ।
मूर्छनायामसहितं चकारार्तस्वरं ततः ॥७५॥
यदि भूपोऽसि कृपया स्वं नाम कथयस्व मे ।
यदि तारापतिर्भूमौ कथमागमनं भवेत् ॥७६॥
बलान्मनो मेऽपहृतं विहितं नैव दर्शनम् ।
चिन्ता वितीर्णा चिन्त्या तां न कथं नाशयिष्यसि ॥७७॥
पृच्छामि किं वियोगार्ता न जाने नाम तावकम् ।
कथं तेऽविदितं स्थानं पश्यामि भुवि दुर्लभम् ॥७८॥
मा भूत्कस्यापि लोकेऽस्मिन्हृदि चिन्ता यथा मम ।
न मे स्वस्थं मनो नैव प्रियं पश्यामि सुन्दरम् ॥७९॥
अद्यापि मन्मनो नाथ वक्षोपरि संस्थितम् ।
न निद्रायां रुचिर्नैव जायते जातु भोजने ॥८०॥

चिन्तादावाग्निशान्त्यर्थं कृपाम्भो यदि मुञ्चसि ।
सुधामयाभ्रतुल्यस्य का क्षतिस्तव जायते ॥ ८१ ॥
न सा बुद्धिमतां बुद्धिर्दुःखमेवातिदुःखितम् ।
नयेत्कथं वह्निदग्धमग्नावेव निवेशयेत् ॥ ८२ ॥
सुखोद्यानेऽङ्कमेवैका दुःखकण्टकवर्जिता ।
जाता शृङ्गारलतिकानन्दपुष्पौघसंयुता ॥ ८३ ॥
इन्द्रजालं न ते वेद्मि कुतोऽपि परिशिक्षितम् ।
यद्दर्शनेन चैकेन सर्वं मेऽपहृतं त्वया ॥ ८४ ॥
सुमनस्सुकुमारेयं तनुर्मे तनुतां गता ।
निद्रां न लभते चिन्ताकण्टकास्तरणेऽधुना ॥ ८५ ॥
एवं वियोगविधुरा चिन्ताशतसमाकुला ।
प्रलापं सकलां रात्रिमकरोत्सा नृपात्मजा ॥ ८६ ॥
तस्यां रात्रौ व्यतीतायां प्रभाते सा सुलोचना ।
बाष्पाम्बुक्लिन्नवस्त्रापि ममार्ज वदनं शुभम् ॥ ८७ ॥
यथापरो न वेत्तीदं कश्चित्कर्म मया कृतम् ।
सन्तोपोपरता बाला सखीभिस्सह साभवत् ॥ ८८ ॥

इति पण्डितश्रीवराख्येन यवनशास्त्रपारङ्गमेन
विरचिते कथाकौतुके द्वितीयं कौतुकम् ॥

॥ ३ ॥

रागबाणासनादिच्छाबाणो यदि विनिर्गतः ।
तदा दृढतरस्यापि न कार्यं बुद्धिचर्मणः ॥ १ ॥
प्रसिद्धिर्वाङ्मतो लग्नः कुर्याद्दन्तर्व्यथां शरः ।

स हि चाभ्यन्तरालीनो बहिर्व्रणविधायकः ॥ २ ॥
कथयन्त्येव विबुधाः कथं गोपयितुं परम् ।
सौगन्ध्यं को भवेच्छक्तश्चित्तरागैणानाभिजम् ॥ ३ ॥
मृगनाभिः पटच्छन्ना सौगन्ध्येनैव लक्ष्यते ।
तथैव लक्षणै रागो मनस्संस्थोऽपि रागिणाम् ॥ ४ ॥
तथान्तर्धाय तद्रागो यद्यप्यन्तः सुरक्षितः ।
दृष्टं बहिरायातो भित्त्वेच्छार्ककरैर्द्रुतः ॥ ५ ॥
जोलेखा नपतेः कन्या विरहाकुलिताशया ।
दिने दिने क्षामतनुः स्वयं तनुतराभवत् ॥ ६ ॥
नाविदत्सा सुखं किंचिद्बहिरन्तस्तथाबला ।
न स्म जल्पति केनापि न पाठयति वा शुकम् ॥ ७ ॥
नापि केलिकलां कांचिदकरोत्सा सुमध्यमा ।
त्यक्ताशना जीवितापि परं तत्सङ्गमाशया ॥ ८ ॥
सामुञ्चद्बाष्पनिकरं क्षणं श्वासान्सुलोचना ।
क्षणमुन्मत्तवद्बाला भ्रमन्ती विगतत्रपा ॥ ९ ॥
विलोक्य पाण्डुवर्णां तां भर्ण क्षामतनुं ततः ।
भयेनोद्विग्नमनसस्सर्वेऽन्तःपुररक्षकाः ॥ १० ॥
परं दासीगणस्तत्र भयेनातुरतामगात् ।
सखीभिस्सह तद्रूपवैपरीत्यं विलोक्य तत ॥ ११ ॥
आसंस्तु सहसा सख्यः कथयन्त्यः परस्परम् ।
अकस्मात्किमिदं जातं केनेदं कर्म वा कृतम् ॥ १२ ॥

३। °रागेण?

स्वं स्वं बुद्धिबलं सम्यक्समाश्रित्य भयातुराः ।
नानार्थं कुशलाः प्रोचुर्हार्दभावसमन्विताः ॥ १३ ॥
तासामेकावदत्तत्र गच्छन्नागच्छन्नेव वा ।
कोऽपि नालोकितोऽस्माभिः ज्ञातुमेतद्विधिः क्षमः ॥ १४ ॥
अपराप्यवदन्मन्ये जिता बालमृगीदृशा ।
देवकन्याः पुनस्ताभिः क्रूरदृष्ट्या किमीक्षिता ॥ १५ ॥
तेनेयं तनुतां याता ज्ञानवर्णमनोरमा ।
नान्यं निमित्तं मन्येऽहं दैवमत्र हि कारणम् ॥ १६ ॥
अन्यापि चिन्तया युक्ता प्रोवाच वचनं शनैः ।
मन्यमाना स्वमेवेयं रूपेणाप्रतिमं भुवि ॥ १७ ॥
किं वा तद्बिम्बितं दृष्ट्वा मुग्धा दर्पणमण्डले ।
तच्चिन्तयैव तनुतां गता भूपतिकन्यका ॥ १८ ॥
अथापरावदत्तत्र प्राप्तकालमिदं वचः ।
एवं जानाम्यहं सख्यः कारणं शृणुताधुना ॥ १९ ॥
तनुं यन्त्रे लिखित्वास्या मान्त्रिकेनापि केनचित् ।
कार्श्यं किं वाबला नीता मन्त्रैरुच्चाटनादिभिः ॥ २० ॥
तथापरावदत्तत्र तासां बुद्धिबलोर्जिता ।
जानेऽहं कारणं सख्यस्तत्यं तत्सम्भविष्यति ॥ २१ ॥
किंचित्स्वप्नेऽनया दृष्टं सत्यं तन्मन्यमानया ।
तेन चिन्ताभरेणास्या गतं शिथिलतां वपुः ॥ २२ ॥
एवं तास्सहितास्सर्वा भयाकुलितमानसाः ।
कर्मणोऽन्तं नाधिजग्मुस्तावत्तो विस्मयान्विताः ॥ २३ ॥

तस्मिन्सखीजने ऽलब्धपरमार्थे मृगीदृशः ।
तावत्समागता धात्री कर्तुं तत्कर्मनिर्णयम् ॥२४॥
सापि सर्वार्थकुशला रासोल्लासविचक्षणा ।
त्रिजगन्मोहनी दक्षा मोहिनीवापराभवत् ॥२५॥
सामीप्यकारिणी सम्यक्स्त्रीपुंसोर्विप्रयुक्तयोः ।
प्रेम चित्ते न यस्यास्ति कर्तुं तेनान्वितं क्षमा ॥२६॥
चित्तासक्तिकथासक्ता बाल्ये वयसि सा क्षमा ।
कस्यापि हर्तुं हृदयं केनापि हृतमानसा ॥२७॥
एकदागत्य सा रात्रौ विधाय प्रणतिं पुरः ।
कथयामास सेवां तां कृतां तस्याः पुरातनाम् ॥२८॥
लावण्योद्यानमध्ये त्वां मन्ये कुसुममञ्जरीम् ।
त्वच्चिन्ताकण्टकयुतास्सर्वा नीरजलोचनाः ॥२९॥
सदा हर्षयुतं ते ऽस्तु मानसं वरवर्णिनि ।
चिन्ताविरहिता नित्यं भव प्रहसितानना ॥३०॥
त्वद्भाग्यवशतस्सुभ्रु प्राप्तासि पदमुत्तमम् ।
श्रोतुमर्हस्यनाथाया विज्ञप्तिं मम साम्प्रतम् ॥३१॥
शय्यागृहे ऽहमेवैका तदोन्मृष्टं च सुन्दरि ।
गर्भक्लेदादिकं सर्वं यदाभूज्जन्म ते शुभम् ॥३२॥
सुगन्धद्रव्यसंयुक्तैर्वारिभी रचितं मया ।
स्नानमुत्तमगन्धेति तदा ते नाम निर्मितम् ॥३३॥
अनन्तरं मया सुभ्रु त्वदर्थं स्तनमर्पितम् ।
यत्पीत्वा नयनानन्दकारिणीन्दुकलोपमा ॥३४॥

सर्वलक्षणसम्पूर्णा रूपातिशयशालिनी ।
सुकुमाराङ्गवत्यङ्गी वर्धमाना दिने दिने ॥ ३५ ॥
स्वेच्छयैव यदा सुभ्रु निद्रामुकुलितेक्षणा ।
क्षणमेकं प्रसुप्तासि रजन्यां दिवसेऽपि वा ॥ ३६ ॥
कदोत्तिष्ठति कल्याणयुतेयं भामिनी पुनः ।
इत्यहं जागरपरा तदा चिन्ताकुलाशया ॥ ३७ ॥
यदा त्वं चञ्चलापाङ्गि गती जातमनोरथा ।
सुकुमाराङ्घ्रियुगला पतन्ती पुनरुत्थिता ॥ ३८ ॥
युक्ता हर्षेण महता जातभाग्योदयाभ्यहम् ।
पूजयन्ती स्वशिरसा जाता त्वत्पादपङ्कजम् ॥ ३९ ॥
यद्यद्वस्तु त्वया सुभ्रु प्रार्थितं भुवि दुर्लभम् ।
तत्तत्त्वचित्तरञ्जनार्थं समानीय समर्पितम् ॥ ४० ॥
एवं तदा मया सेवा विहिता ते सुमध्यमे ।
अधुनापि मनो नूनं शुश्रूषापरमस्ति मे ॥ ४१ ॥
जाने चिन्तापराधीनं मनो नीरजलोचने ।
तावकं मत्सकाशात्तां किं गोपयसि भामिनि ॥ ४२ ॥
सत्यं वदाधुना केन विप्रियं विहितं परम् ।
अहो चिन्तानभिज्ञापि किं मग्ना शोकसागरे ॥ ४३ ॥
कथमुन्मत्तरूपैव जातासि वद सुन्दरि ।
व्यथा चित्तान्तरस्यापि कथं वा चारुलोचने ॥ ४४ ॥
मुखाम्भोजं कथं चारु म्लानवर्णं दिने दिने ।
मुहुर्विनिर्गताश्वासा दावाग्निसदृशाः कथम् ॥ ४५ ॥

चिन्तानिशागमे भानुरूपास्तं त्वं कथं गता ।
यौवनोपमि किं चन्द्रकलेव तनुतां गता ॥४६॥
किं तु जानामि केनापि शशिरूपेण ते हृतम् ।
चैतन्यं वद सत्यं मे तमेवान्वेषयाम्यहम् ॥४७॥
स्वर्गस्थो यदि देवेभ्यो रूपमादाय निर्मितः ।
अविचिन्त्यगतिस्तद्वत्कश्चित्सुभ्रु विलोकितः ॥४८॥
त्वदाज्ञया समाराध्य मन्त्रं सद्यः फलप्रदम् ।
समानीय स्वबुद्ध्या तं दर्शयिष्यामि साम्प्रतम् ॥४९॥
गन्धर्वजातिसम्भूतो यदि वा वनगोचरः ।
कश्चिदालोकितो भद्रे रूपेणाप्रतिमो भुवि ॥५०॥
त्वदाज्ञामात्रमासाद्य फुल्लेन्दीवरलोचने ।
विना यत्नेन तं बद्ध्वा तवाग्रे स्थापयाम्यहम् ॥५१॥
किमाश्चर्यं नृलोकस्थं वशीकर्तुं नरं मतः ।
तवाज्ञया मया वश्यो विधिरपि विधीयते ॥५२॥
एतावच्चारुनयने मय्यस्ति बलमुत्तमम् ।
त्यज चिन्तां कुरुष्वाज्ञां कार्यं ते साधयाम्यहम् ॥५३॥
श्रुत्वा धात्रीवचः कर्णपीयूषमिव तत्र सा ।
विमुच्य सहसा श्वासान्प्रोवाच नृपकन्यका ॥५४॥
सत्यं विनापरं किंचिद्वक्तुं न विदितं मम ।
बाष्पतारावलयितं कृत्वा मुखसुधाकरम् ॥५५॥
हा मातर्नास्ति वक्तव्यं मन्दाज्ञागलितं मम ।

५२० वाच्यो.

मनःकोशमिदं मोक्तुं दुर्लभा बुद्धिकुञ्चिका ॥५६॥
तथापि शृणु वक्ष्ये ऽहं कौतुकं यदि ते हृदि ।
सत्यमेतन्न विश्वासस्त्वां विनान्यत्र मे क्वचित् ॥५७॥
स्वप्ने ऽद्य यो मया दृष्टः कश्चिल्लोके ऽतिसुन्दरः ।
तस्य रूपमहं वक्तुं न क्षमाब्दशतैरपि ॥५८॥
यद्ययं मन्मथो नूनं स कामः कामनां विना ।
न जातु जायते पुंसां काचित्सा मानसेन मे ॥५९॥
दूरस्थो वर्णहीनः किं हंसस्तत्साम्यमाचरेत् ।
परंपरमहंसो ऽयं मम मानससंस्थितः ॥६०॥
तन्नामरहितस्स्वादुर्भवेत्कटुतरो रसः ।
तस्याभिधेयसंयुक्तः तिक्तो मधुरतामियात ॥६१॥
किं करोमि भृशं मातः चिन्ता मनसि साम्प्रतम् ।
कृत्वोपायमनाथां मां रक्ष वृद्धा यथा पुरा ॥६२॥
श्रुत्वा नृपसुतायास्तद्वचनं जातसंभ्रमा ।
चित्रस्थेवाभवत्तत्र धात्री ध्यानपरा पुनः ॥६३॥
पूर्वमुक्तं त्वया सर्वं कार्यं ते साधयाम्यहम् ।
पश्चाच्छ्रुत्वाद्भुतं तस्या उपदेशपराभवत ॥६४॥
शृणुष्वावहिता सुभ्रु शरीरं मा च शोषय ।
अनुक्तनामधेयस्य कथमन्वेषणं भवेत् ॥६५॥
तामुवाचेति प्रथमं कार्यं कस्यापि मायिनः ।
भातीदं मायया कुर्वन्नद्भुतं कर्म नित्यशः ॥६६॥

---

63c चित्रस्येवा°.

दर्शयित्वाद्भुतं रूपं मायाविरचितं जने ।
अपयातीव मायावी बलादाकृतमानसम् ॥६७॥
इत्याकर्ण्य नृपसुता प्रोवाच वचनं शनैः ।
रूपं दर्शयितुं शक्तो न मायावीदृशं क्वचित् ॥६८॥
इत्युक्तोऽपि तया धात्री सान्त्वपूर्वमिदं वचः ।
उवाच मन्यमानाद्य स्वप्नोऽयमिति सुन्दरि ॥६९॥
स्वप्नो मायाविधेस्सोऽयं बहुधा परिकीर्तितः ।
भावितो दृष्टिजः श्रौतो दिष्टनेत्रोत्थितस्तथा ॥७०॥
वृथायं सकलस्सुभ्रु भव्योऽपि फलदः क्वचित् ।
असत्यवचनात्तस्मान्मा चिन्तां मानसे कुरु ॥७१॥
तामुवाच ततो बाला तनया चक्रवर्तिनः ।
यदि स्वप्नो वृथा किं तद्वण्या नित्यं स्वमेधसः ॥७२॥
कथयन्त्येव सुधियः समशीलान्वितं द्वयम् ।
सत्यं सत्येन संयुक्तमितरेणेतरद्वचः ॥७३॥
तामुवाच ततो वृद्धा साध्वी चिन्ताकुलाशया ।
बुद्धियुक्ता त्वमेवैका मुञ्चेमं दुःखसंचयम् ॥७४॥
यदीदं मत्करे कार्यं भवेन्मातः कथं पुनः ।
त्वमेव दुःखसंयुक्तां करोमीति वदाधुना ॥७५॥
यातं हि मत्करे बुद्धिकार्यं नूनमसंशयम् ।
तच्चिन्ताकुलितं नित्यं न वशे मम मानसम् ॥७६॥
चित्रं प्रतिहितं चित्रं मम मानसमन्दिरे ।

---

67b मया°.

ग्रहो भाग्यरविनीता पाण्डुत्वं भवता कथम् ॥८८॥
तनुर्बाणासनानम्रा विहिता भवता मम ।
निन्दाशरस्य लक्ष्यं मे मानसं कथमर्पितम् ॥८९॥
निष्कृपाय त्वया तस्मै दत्तं मन्मानसं करे ।
न जानामि मुग्धः किंचित्तस्माद्दुःखं विना परम् ॥९०॥
निहितं किं तु तत्प्रेमज्योतिर्हृदि ममोत्तमम् ।
विदधाति कथं स्वप्ने दर्शनं सोऽतिसुन्दरः ॥९१॥
निद्रा दरिद्रतां याति कथं तं स्वप्नसङ्गतम् ।
पश्यत्या मम नैवायं चिरं तिष्ठति चान्तिके ॥९२॥
भाग्योदयफलं तं तु स्वापं जानाम्यसंशयम् ।
यन पश्यामि तं कान्तं सुकुमारं सुलोचनम् ॥९३॥
यदि भाग्यानि मे दैवात्फलितानीति निद्रया ।
कान्तं संयोजयाम्येनं स्वयं तद्बोधतस्त्वकम् ॥९४॥
एवमुक्तावती बाला तद्वियोगातुरा परम् ।
प्रहरत्रितयं रात्रेः पश्चान्निद्रामुपागता ॥९५॥
कंचित्स्वापं समासाद्य प्रबुद्धा मनसैव सा ।
यावन्निमीलिताक्ष्येव सोऽपि तावदुपागतः ॥९६॥
वपुपादुत्तमरूपेण दृष्टपूर्वेण मंजुलम् ।
विलोक्यानन्दिता कान्तं बाला जितसुधांशुना ॥९७॥
उत्थाय शयनात्तस्मात्पतित्वा पादयोस्ततः ।
विधाय प्रणतिं सान्त्वपूर्वमूचे वचस्तदा ॥९८॥
त्वमेव गुणिमुक्तावनायको येन कल्पितः ।

लावण्याम्बुधिसम्भूतस्सुधांशुरिव दर्शितः ॥ ९९ ॥
त्वच्छिखा साधु रचिता शदणवक्रवशालिनी ।
मन्मनोमृगबन्धार्थं वागुरेव निरूपिता ॥ १०० ॥
त्वमेव सर्वरत्नानां महामणिरिवार्पितः ।
तथैव रूपिणां मध्ये ख्यातः परमसुन्दरः ॥ १०१ ॥
सरला वंशसंभूता रचिता ते तनुर्लता ।
वदनं स्मितशोभाढ्यं सुन्दरं वनजोपमम् ॥ १०२ ॥
येनैवाद्भुतलावण्ययुतं लोके कृतं वपुः ।
तस्यैव लोकनाथस्य शपानं ते ददान्यहम् ॥ १०३ ॥
मुञ्च मुञ्चाधुना नाथ मनःकाठिन्यमेव मे ।
मुखादमृतनिष्यन्दि वचनं देहि साम्प्रतम् ॥ १०४ ॥
सत्यं वदाधुना केन तपसा रूपमुत्तमम् ।
प्राप्तं कस्याभिजातोऽसि परं कौतूहलं हि मे ॥ १०५ ॥
कथं मनो मेऽपहृतं बलेन भवता पुनः ।
स्वप्नसंदृष्टरूपेण कृपया वद साम्प्रतम् ॥ १०६ ॥
यदा स्वप्ने मया दृष्टं त्वदीयं मुखपङ्कजम् ।
तदाप्रभृति मे नाथ चिन्ताशतयुतं मनः ॥ १०७ ॥
प्रहृष्टोवाच शनकैः किंचिज्जातमनोरथः ।
सोऽपि सर्वार्थकुशलो मोहयन्निव तां पुनः ॥ १०८ ॥
नाहं देवसमुत्पन्नो न च गन्धर्वसम्भवः ।
पञ्चतत्त्वात्मकं सुभ्रु विद्धि मां विधिवंशजम् ॥ १०९ ॥
करोषि यदि मत्प्रेमपरमव्यैव मानसम् ।

यदि वा तद्भवेत्सत्यं वचनं चारुलोचने ॥११०॥
तदा नित्यं समुदिता प्रेमरक्षा विधीयताम् ।
मत्सङ्गमाप्तये सुभ्रु कंचित्कालमुपेक्ष्यताम् ॥१११॥
यथा त्वन्मानसे प्रेम मदीयं वरवर्णिनि ।
त्वत्प्रीतिसहितं विद्धि मदीयमपि नित्यशः ॥११२॥
एवमुक्त्वा ततोऽनुक्तनामधेयोऽपि तत्र सः ।
अकथ्य देशनियमं प्रबुद्धा तावदेव सा ॥११३॥
उत्थाय शयनाद्रूपकन्यका दर्पनिर्भरा ।
अपश्यन्ती पुनः कान्तं चिन्ताद्विगुणमादधे ॥११४॥
पूर्वं स्वल्पैव चिन्ताभूत्स्वप्नेक्षणवशेन सा ।
कृतेऽपि वाग्विलासेऽस्याः समं तेनाधिकाभवत् ॥११५॥
स्मारं स्मारं महत्प्रेम कारं कारं कथास्तुताः ।
धारं धारं मनोमध्ये वारं वारं सुविस्मिता ॥११६॥
उन्मत्तेवाभवत्तत्र डाकिनीदत्तलोचना ।
मनःपतङ्गोऽपि पुनर्लीनश्चिन्ताहुताशने ॥११७॥
प्रभाते पुनरुत्थाय त्यक्त्वा निद्रां सुमध्यमा ।
तच्चिन्तापूर्णचित्तास्या न स्मृतिः काप्यभूत्तदा ॥११८॥
बहुदुःखान्वितं तस्या हृदयं हरिणीदृशः ।
तथा न कश्चिच्छक्तोऽभूद्धन्तुं वर्षशतैरपि ॥११९॥
ततस्सा कुमुदस्यादिकान्तिकेव सुमध्यमा ।
तच्चिन्तार्ककराक्रान्ता मूर्च्छितेवापतद्भुवि ॥१२०॥

116b कथाकुला.

क्षणमाक्रन्दनपरा क्षणं प्रहसितानना ।
क्षणं बुद्धिविलोपिता क्षणमुन्मत्तगामिनी ॥१२१॥
क्षणं मालां विदधती मस्तके च करे क्षणम् ।
क्षणं नग्ना विनिर्यान्ती क्षणं दिव्याम्बरावृता ॥१२२॥
क्षणं शयाना भूपृष्ठे महार्हास्तरणे क्षणम् ।
अभूत्तद्दुष्करं किंचिद्धोके यन्न तया कृतम् ॥१२३॥
एवं विलोक्य तां बालां विरहोत्कण्ठिताशयाम् ।
परिवव्रुस्तदा सख्यस्ताराः शशिकलामिव ॥१२४॥
यदि कुत्रापि संभिन्नं सखीनां मण्डलं भवेत् ।
चलिता तेन मार्गेण शीघ्रं शरगतिस्तदा ॥१२५॥
पवनं मुष्टिमध्येऽपि तूलराशौ हुताशनम् ।
धर्तुं शक्तो भवेत्कश्चिन्न हि तन्मानसं क्वचित् ॥१२६॥
एवं तास्सहितास्सर्वा भयाकुलितचेतसः ।
तैमोसस्यान्तिकं गत्वा तद्वृत्तं संव्यवर्णयन् ॥१२७॥

इति यवनशास्त्रपारङ्गमपण्डितश्रीवरविरचिते
कथाकौतुके तृतीयं कौतुकम् ॥

॥ ३ ॥

शृणु भूपाल ते कन्या किमप्युन्मत्तरूपिणी ।
जाता कस्मान्निमित्तं तु न जानीमो नरोत्तम ॥१॥
राजेन्द्र तनयास्माभी रक्षिता यत्नसंचयैः ।
नोपागच्छति चैतन्यं उपायो विधीयताम् ॥२॥
श्रुत्वाद्भुतं तु तद्वाक्यमनन्यतनयो हि सन् ।

पुलकाङ्कितसर्वाङ्गः क्षणमासीद्दिशां पतिः ॥ ३ ॥
ततो विचिन्त्य तद्रक्षाविधिमेकं नरोत्तमः ।
दृष्टवान्नापरं किंचिद्विना कारागृहं ततः ॥ ४ ॥
उवाचानुचरान्सर्वान्स्वर्णरौप्यमयी ततः ।
शृङ्खलोच्चृङ्खला नागमूर्तिः शीघ्रं विधीयताम् ॥ ५ ॥
नागपाशोपमेनेयं बद्धा तेनैव भामिनी ।
उद्दात्युन्मत्तभावं ते तथा चक्रुः समाहिताः ॥ ६ ॥
तस्या बद्धं तु तेनैव बन्धनेनानुजीविभिः ।
निधानमिव नागेन शुशुभे चरणद्वयम् ॥ ७ ॥
अपूर्वगुणरत्नौघशालिनी नृपकन्यका ।
अभूदत्यधिका नूनं निधानादपि सा ततः ॥ ८ ॥
तस्माद्बाधकदुर्वर्णरचितेनामुना स्वयम् ।
बन्धनेनैव बद्धा सा नागसेनेति मन्यते ॥ ९ ॥
यदैव बद्धं तत्तेन पाशेन चरणद्वयम् ।
बाष्पाकुलेक्षणाप्यूचे सान्त्वपूर्वमिदं वचः ॥ १० ॥
मद्वपू रागपाशेन बद्धमेवास्ति निश्चितम् ।
स एव दुर्निवार्यो मे किमेतेन प्रयोजनम् ॥ ११ ॥
बलेन रक्षितं नूनं शरीरं कार्श्यमागतम् ।
भारयुक्तं ममानेन वृथा कुरुत माधुना ॥ १२ ॥
बलं नास्त्येव मोक्तुं मे श्वासान्मुहुरुपागतान् ।
कुत्रापि गन्तुं स्थातुं वा तथैव मम साम्प्रतम् ॥ १३ ॥

१५ नागेति

मद्दत्तानेन पाशेन बन्धनं किं विधीयते ।
काठिन्यकरवालेन किं चित्तोच्छेदनं तथा ॥१४॥
मतिर्नोगानपालस्य शङ्कयायोऽयमत्ततः ।
अद्य भूमौ स्वयं मां वद्धबन्धेन पादपम् ॥१५॥
बन्धनादिकृतं दुःखं तस्करायैव दीयते ।
मनो मेऽपहृतं येन बलाद्बालमृगीदृशः ॥१६॥
दर्शनं विहितं येन स्वप्ने मायां विधास्यता ।
दर्शयन्नात्मनात्मानं क्षणं यो नावतिष्ठते ॥१७॥
भाग्यं फलितमेतन्मे यत्प्राप्तं बन्धनं त्विदम् ।
अनेनैवाधुना कान्तं वशामि स्वप्नसङ्गतम् ॥१८॥
बद्ध्वा दृढतरं तावत्स्थापयामि प्रियं पुरः ।
यावत्पश्यामि तद्वक्त्रं चिरं परमसुन्दरम् ॥१९॥
किमुक्तं मुग्धया नाथं बद्ध्वाग्रे स्थापयाम्यहम् ।
ज्ञातं किं न मया कान्तसौकुमार्यं सुदुर्लभम् ॥२०॥
तस्यांशुके निपतितो रेणुः सम्मृश्यते क्वचित् ।
स एव ज्ञायते नूनं गिरिभारोपमो मम ॥२१॥
वरं मे सततं भूयात्पीडेयं बन्धनोत्थिता ।
मा भूत्तस्य कदाचित्सा, क्षम्यतां नाथ दुर्वचः ॥२२॥
ईदृशैरेव सद्वाक्यैः कर्मण्यस्मिन्कृताशयाः ।
रागिणो रागमास्वाद्य रमन्ति भुवि भाविताः ॥२३॥
एवं भूपालतनया स्नेहपूरितमानसा ।
तद्ध्यानोपरता नित्यं पीडां नैवान्वमन्यत ॥२४॥

कदाचिद्विप्रयोगोत्थकरुणाक्रन्दनातुरा ।
क्वाचित्तच्चिन्तनोद्भूतपरमानन्दनिर्भरा ॥२५॥
एकोहि चित्तरागाख्य नानारागविधायक ।
मन्येऽद्भुत भवत्कार्यद्वितय दुष्कर परे ॥२६॥
कदाचिन्निपुण नून करोष्युन्मत्तरूपिणम् ।
तथैवोन्मत्तक बुद्धियुक्त कर्तु क्षमो भवान् ॥२७॥
योषिद्वक्रालके लग्न यदि स्यान्मानस परम ।
तदैवोन्मत्तभाव त्व नयसीति विचक्षणम ॥२८॥
तच्चिन्तारहित चेत्स्याद्धृदय यस्य देहिन ।
स एव मतिमान्नून रचितो भवता भुवि ॥२९॥
रात्रौ तदैव सा बाला बुद्धिशून्येव मन्दिरे ।
तद्वियोगव्यथाक्रान्ता चित्तासक्तिसमाकुला ॥३०॥
उदेरामञ्जरीतुल्यनेत्रोत्थाम्बुकणैर्मुहु ।
धरित्री कुर्वती पूर्णा मुक्ताभिरिव सर्वत ॥३१॥
व्यथापात्रेण पिबती स्वक रुधिरशीधुकम् ।
अशोचदात्मनात्मान कृत्वा जवनिका मुखे ॥३२॥
जानेऽह यदि तन्नाम तदा तज्जपतत्परा ।
विदित यदि तत्स्थान तत्र यास्यामि माहिता ॥३३॥
पीत मया चिर रक्त कलिकावत्स्वदङ्गनम् ।
तच्चिन्तयान्वित तद्वन्मनोऽहर्निश परम् ॥३४॥
दासीकर्म करोम्येव तव मा पश्य चक्षुषा ।
युक्ता यदि न ते गेहे भवित्री गृहिणी त्वहम् ॥३५॥

मा भून्मत्सदृशी काचिद्दुःखिता लोकमण्डले ।
तथैव निन्द्या सर्वत्र भ्रातृबन्धुषु सर्वदा ॥ ३६ ॥
मां दृष्ट्वा जनको मेऽद्य जायते लज्जयान्वितः ।
दासदासीगणास्सर्वेः क्वापि याता विहाय माम् ॥ ३७ ॥
चिन्ताकुला केवलाहं मग्ना शोकाम्बुधौ परम् ।
धिङ्मदीयमिदं जन्म दुःखातुरमनेकशः ।
किं प्राप्तं जीवलोकेऽस्मिन्वरं मरणमेव मे ॥ ३८ ॥
एवं चिन्तातुरा यावत्तावन्निद्रामवाप सा ।
तस्मिन्क्षणेऽथ संप्राप्तः सोऽपि पूर्वावलोकितः ॥ ३९ ॥
दृष्ट्वा प्रियं तथा रूपयुतं सर्वातिसुन्दरम् ।
उत्थाय शयनात्तत्र पादौ जग्राह भामिनी ॥ ४० ॥
सान्त्वपूर्वं विधयैव प्रोवाच मधुराक्षरम् ।
प्रेक्षन्ती दीननयना निःश्वसन्ती मुहुर्मुहुः ॥ ४१ ॥
कथं नाथ न जानासि मद्दुःखं त्वद्वियोगजम् ।
न सुखं नैव निद्रा मे कथं नास्ति कृपा तव ॥ ४२ ॥
सत्यं वदाधुना नाथ कुत्र वासोऽस्ति ते पुनः ।
तथा किंनामधेयोऽसि रक्ष मां शरणागताम् ॥ ४३ ॥
श्रुत्वेति प्रहसन्प्राह कृत्वा भ्रूकुटिमन्मुखम् ।
शृणुष्वावहिता सुभ्रु सत्यं ते कथयाम्यहम् ॥ ४४ ॥
प्रथितो हि नलोकेऽस्मिन्देशो मे मेरुसंज्ञितः ।
अनेनमेरुनामाहं तथैव वरवर्णिनि ॥ ४५ ॥
इत्युक्त्वान्तर्हितस्तत्र तावत्सापि नृपात्मजा ।

प्रबुद्धा दर्पसंयुक्ता प्राप्तजीवं यथा मृतः ॥४६॥
शास्त्राम्बुधिं समालोड्य प्राप्तनानार्थसंचयाः ।
सुधियः कथयन्त्येवं चरित्रं परमद्भुतम् ॥४७॥
पूर्वमेको महानासीदीश्वरो मायया पुनः ।
ससर्जादमनामानं सर्गार्थं पुरुषं परम् ॥४८॥
सदा लब्धगतिस्तेपे तपः परमदारुणम् ।
ततः तुष्टो ददौ तस्मै दर्शनं भगवान्पुनः ॥४९॥
विधाय दर्शनं तस्य मायावनिकान्तरे ।
स्थितस्यालोकयामास ततोऽसौ तत्समीपगान् ॥५०॥
पैगम्बरांस्ततः साध्यनामधेयानवस्थितान् ।
एकत्र ध्वजच्छत्त्रौघसहिताञ्जपतः परम् ॥५१॥
सिद्धाभिधानानालेयानेकत्र समवस्थितान् ।
अन्यत्रोत्पादिताञ्जीवान्कोठिकोटिसहस्रशः ॥५२॥
विलोकयन्सभां रम्यां विस्मयोत्फुल्ललोचनः ।
जीवात्मानं ददर्शैकं योऽसौभाव्यं नरोत्तमम् ॥५३॥
स विलोक्यैव तं कान्त विचारनिरतोऽभवत् ।
कोऽयं कमलपत्त्राक्षः कस्य वा याति पुत्रताम् ॥५४॥
एवं तत्रादमे जाते विमर्शाकुलमानसे ।
अकस्मादुदभूद्वाणी साऽप्येतामशृणोत्ततः ॥५५॥
मा चिन्तां कुरु बालोऽयं त्वत्सृष्टो जायते क्वचित् ।
जातेनानेन ते नाम प्रसिद्धिमुपयास्यति ॥५६॥

---

56b om क्वचित्

यात्रोभकाभिधानस्य गृहेऽयं संभविष्यति ।
जनयन्नयनानन्दं लोकानां लोकसम्पदा ॥५७॥
तद्वंशोद्यानमध्येऽयं सिंहोर्जितपराक्रमः ।
बलेन महता शान्तिं दुष्टसत्त्वान्विनेष्यति ॥५८॥
खलेलोलाङ्ककस्यायं मनःसागरकौस्तुभः ।
नास्य भानुः प्रतापेन कान्त्या तुल्यो न चन्द्रमाः ॥५९॥
यदोत्क्षिपति प्रावारं स्कन्धदेशान्मुहुर्मुहुः ।
तदायं जीवलोकस्य मनो हर्तुं क्षमो भवेत् ॥६०॥
न हि वक्तुं भवेत्कश्चिद्रूपमस्य मनोहरम् ।
तेनैव प्रथितो नूनं जीवलोके भविष्यति ॥६१॥
नित्यं दिव्याम्बरावृतः सदा मौलिविभूषितः ।
भालभानुर्भवेदस्य दोषरात्रिविवर्जितः ॥६२॥
प्रासादचन्द्रिकैतस्य नभोमण्डलमास्थिता ।
उन्नता प्रथिता लोके सर्वरत्नविभूषिता ॥६३॥
मेस्राभिधानदेशेऽयं राजा राजशिरोमणिः ।
अतोऽमेस्रनामापि ख्यातः प्रियतया भवेत् ॥६४॥
परमत्यद्भुतं रूपं दृष्ट्वा भाग्योदयं तथा ।
भ्रातरोऽस्य भविष्यन्ति रत्नान्वेषणतत्पराः ॥६५॥
दत्तमेतन्मया किं तु भवांल्लोकपतिः कृतः ।
देव्यस्मै किं प्रदातासि सन्तुष्टं यदि ते मनः ॥६६॥
इति श्रुत्वाद्भुतं वाक्यं बद्धाञ्जलिपुटं ततः ।
उवाच हर्षसंयुक्तः प्रश्रयानतमस्तकः ॥६७॥

यद्रूपं जीवलोकेऽस्मिन्मया दत्तं तदन्तरात् ।
तद्दागद्वयमेतस्मै लोकार्थिकं तवाग्रतः ॥६८॥
नैतद्रूपेण सदृशः कश्चिद्दविनुमर्हति ।
अनेनौपम्यमन्वेषां नास्य भूयात्परैस्सह ॥६९॥
इति सम्भाषणं कृत्वा सोऽपि सन्तुष्टमानसः ।
समालिङ्ग्य पुरो गत्वा चुचुम्ब वदनं शनैः ॥७०॥
दत्त्वाशिषं ततोऽमुष्मै समायातो महीतलम् ।
स विसृष्टो हि सर्गार्थं ततस्तामकरोच्छुभाम् ॥७१॥
एतस्मिन्नेव संसारे सर्वे श्रोसहितं जनाः ।
आसाद्य समयं नामडिण्डिमं ताडयन्ति च ॥७२॥
इमं मायामयं सर्वं कथयन्ति विपश्चितः ।
भात्ययं दर्शयन्नूपैरनेकैस्तां मुहुर्मुहुः ॥७३॥
दीनं त्वनियमेनैतं कदाचिद्दर्शयिष्यति ।
जन्मादिवैपरीत्येन कदाचिद्वीर्यवानयम् ॥७४॥
कृत्वा सर्गं गते तस्मिन्नादमाख्ये नृलोकतः ।
तदंशजोऽथ लोकेऽस्मिञ्शेथो नामाभवत्प्रभुः ॥७५॥
विधायाद्भुतमैश्वर्यं तस्मिन्याते दिवं पुनः ।
एद्रैसाख्योऽस्य तनयः ततः सर्गमपालयत् । ॥७६॥
नामावशेषतां याते तस्मिन्नपि महीतले ।
नौह्नाभिधानो राजाभूत्प्रजा धर्मेण पालयन् ॥७७॥
समायातो यदेवासौ मायाम्बुधितरङ्गताम् ।
खलेलीलाहकाख्योऽभूद्धर्मात्मा भूपतिस्तदा ॥७८॥

समारूढे दिवं तस्मिन्धर्मात्मनि महीपतौ ।
इसहाकाभिधानोऽभूद्भूपस्तद्वंशजः पुनः ॥ ७९ ॥
तस्मिन्नपि महासत्त्वे गते नामावशेषताम् ।
जीवलोकेऽभवद्राजा याकोभाख्यो महामतिः ॥ ८० ॥
कनानघोषसंस्थोऽसौ महाबलपराक्रमः ।
मेसपथामादिविषयान्बुभुजे भूपतिस्तदा ॥ ८१ ॥
गजवाजिसहस्रौघैर्वृतो भूपशिरोमणिः ।
अच्युतां राज्यलीलां तां रचयञ्शुशुभे नृपः ॥ ८२ ॥
रूपशीलगुणौदार्यसहिते शुद्धवंशजे ।
महिष्यौ नृपतेरास्तां धर्मकर्मक्षमे शुभे ॥ ८३ ॥
अवापैका तयोः पुत्रानेकादश महाबलान् ।
अन्यैकं गर्भरत्नं तं योसोभाख्यमजीजनत् ॥ ८४ ॥
जातेषु तनयेष्वेवं याकोभाख्यो महीपतिः ।
योसोभनामधेयेन पुत्रेणावाप सत्सुखम् ॥ ८५ ॥
तमेवांसे समादाय बहिरन्तस्तथानिशम् ।
विचरन्भूपतिस्तत्र परां प्रीतिमवाप सः ॥ ८६ ॥
तेनैव बालकेनास्य प्रीतिस्समभवत्तथा ।
यथामन्यत भूपोऽसावनुत्पन्नानिवापरान् ॥ ८७ ॥
पूर्वं संयोज्य मैत्र्यैवं मायया हर्पितावुभौ ।
विनियोक्ष्यति तौ पश्चा कथं धाता विरोधकृत् ॥ ८८ ॥
अहोऽपण्डितमन्येन दुर्विदग्धेन वेधसा ।
अपराधं विना तस्य कृता ह्यपकृतिः कथम् ॥ ८९ ॥

तज्जन्म तत्सुखं तद्वत्सा प्रीतिर्जनकेन च ।
ऊनद्विवार्षिकस्यास्य जननी संस्थिता तदा ॥९०॥
विहिते वेधसाकार्ये याकोभाख्यो महापतिः ।
जगामातुरतां तत्र बालकेनामुना सह ॥९१॥
स्तन्यं नैवापरा माता ददौ तस्मै नृपार्थिता ।
सपत्नीतनयं मत्वा न दयादर्पिता हृदि ॥९२॥
विमृश्य बहुशो राजा भगिन्यै तं ददौ ततः ।
पालयामास स्नेहेन सानपत्यापि भामिनी ॥९३॥
दिने दिने वर्धमानो जननीसौख्यवर्जितः ।
तां प्राप्य मातरं पितृस्वसारं मुदमाप सः ॥९४॥
असमञ्जसवाक्येन गत्या स्खलितया तथा ।
प्रीतिं ततान बालोऽस्याः प्रणिपातादिकर्मणा ॥९५॥
सापि तत्स्नेहपाशेन बद्धाभूच्चारुलोचना ।
क्षणमेकं विना तेन स्थातुं नैवाभवत्क्षमा ॥९६॥
रजन्यां त्यक्तनिद्रापि लालयन्ती सुतं तदा ।
न चकार दिवा किंचित्कर्म तद्दर्शनं विना ॥९७॥
जनकोऽपि तदुत्कण्ठासहितोऽहर्निशं सदा ।
नामन्यत सुखं किंचित्तनयैस्तैर्मनोरमैः ॥९८॥
तच्चिन्तया समाक्रान्तो बाष्पसंरुद्धलोचनः ।
अविज्ञातस्वदेहोऽपि मुञ्चञ्श्वासान्मुहुर्मुहुः ॥९९॥
एकदागत्य भूपालो भगिनीं बहु मानयन् ।
अङ्के कृत्वा सुतं सान्त्वपूर्वमूचे वचस्ततः ॥१००॥

गोसांगविप्रयोगार्तिविधुरं मां सुखान्वितम् ।
गर्तुं त्वया त्वमेवैका नोपायो दृश्यतेऽपरः ॥१०१॥
यथायं बालको नूनं पालितो यत्नसंचयैः ।
तथा मामपि कल्याणि रक्ष तच्चिन्तयातुरम् ॥१०२॥
अधुना दीयतां मह्यं तनयोऽद्भुतदर्शनः ।
नाहं सोढुं समर्थोऽस्मि तद्वियोगव्यथां पुनः ॥१०३॥
इति भ्रातुर्वचः श्रुत्वा दोलारूढेव साभवत् ।
प्रघाढं स्नेहसंयुक्तामन्तः क्रोधयुतं जगौ ॥१०४॥
अधुना नीयतां भ्रातस्सुतोऽयं सुमनोरमः ।
पुत्रोऽसि मे सदैवैकस्त्वदधीनं हि जीवितम् ॥१०५॥
एवमुक्तावती वाक्यं बुद्ध्युपायमथाकरोत् ।
यथा नैवाप तनयं व्यलीकं नापि भूपतिः ॥१०६॥
तस्मिन्पितामकेनासीत्किंचिद्वासस्समर्पितम् ।
यद्दृष्ट्वा लोभनिर्मुक्तं तपोलीनं मनो भवेत् ॥१०७॥
सुतं निधाय तद्वासस्तत्पटाभ्यन्तरं ततः ।
समानीय पुरस्तस्मै तनयं स्वं समर्पयत् ॥१०८॥
तं गृहीत्वेव तनयं हर्षेणोत्फुल्ललोचनः ।
तद्गृहान्निर्गतो यावच्छुश्रावेमं ध्वनिं नृपः ॥१०९॥
हा कष्टं किमिदं जातं केनाप्यपहृतं शुभम् ।
वासस्तद्दुर्लभं वद्धा यत्पापैर्न विलिप्यते ॥११०॥
श्रुत्वा प्रत्यागतस्सोऽपि तनयेन सहापरे ।
एकत्र मिलिता भीत्या शङ्कनानाः परम्परम् ॥१११॥

पृथक्पृथग्विधायैवं शपथं व्याकुलाशयाः ।
स्वयं तथाकरोत्पश्चात्तद्वस्त्रान्वेषणं तदा ॥११२॥
निर्मुच्य सर्ववासांसि न ददर्शाथ कुत्रचित् ।
पश्चादानीय तं बालं तत्रैवान्वेषणं व्यधात् ॥११३॥
प्राप्य तत्रोत्तमं वासस्तद्वस्त्रान्तरसंस्थितम् ।
उवाच बालकेनैतद्बालबुद्ध्यापहारितम् ॥११४॥
प्राप्तं मयैतत्सद्वासस्स्तेयकृद्वध्यतामयम् ।
यथा नैवाचरेद्भूयः कर्मैवं बुद्धिमोहितः ॥११५॥
तस्मिन्देशे प्रतिज्ञेयं यो यस्य स्तेयमाचरेत् ।
चौरे गृहीते दासत्वं स हि तस्याश्नुते ततः ॥११६॥
इति बुद्ध्यैव सा बालमनिच्छास्तेयकारणम् ।
चकार मायया दासं नृपः प्रत्यागतस्ततः ॥११७॥
एवं कृतेऽपि सा तन्वी चरिते परमाद्भुते ।
उवास हर्षिता नित्यं बालकेनामुना सह ॥११८॥
कदाचिदथ तत्प्राप्तिहर्षिता विधिमायया ।
ज्वरदाहान्विता जाता याता नामावशेषताम् ॥११९॥
श्रुत्वा तदद्भुतं भ्राता तस्या बालमृगीदृशः ।
पुनरागत्य जग्राह तनयं स्वं मनोरमम् ॥१२०॥
लब्ध्वा तं बालकं कान्तं सर्वलक्षणसंयुतम् ।
पुनर्जातमिवात्मानं मन्यमानोऽन्वमोदत ॥१२१॥
यद्दुर्लभतरं लोके वस्तु प्रीतिकरं सदा ।

तत्तेन सदृशा प्राप्तं सर्वं तद्दर्शनाद्भुवि ।
यत्किंचित्सुखदं कर्म लोकेऽस्मिन्प्रथितं भवेत् ॥१२२॥
प्रियत्वात्सर्वलोकस्य रूपेणाप्रतिमेन च ।
अज्ञातमेस्तनामायं लोके सत्यतयाभवत् ॥१२३॥
अपरोऽप्यभवत्तत्र नाम्ना नैव गुणेन च ।
यशसा प्रथितो लोके मन्त्री कस्यापि भूपतेः ॥१२४॥
श्रुतं स्वप्ने तथाप्येवं सत्यं नाधिगतं तया ।
सचिवाज्ञातमेस्तस्य तस्य चैक्यममन्यत ॥१२५॥
अत एव वदन्त्येके स्वप्नो मायाविनिर्मितः ।
यथैवानेन बालेयं मोहिता नृपकन्यका ॥१२६॥
एवं गतेऽपि चैतस्या दोषः कश्चिन्न विद्यते ।
असत्यमपि रागान्धस्सत्यं जानाति रागतः ॥१२७॥
श्रुत्वा प्रियतरं वाक्यं कान्तवक्त्रोद्भवं तया ।
पुनर्जातमिवात्मानममन्यत नृपात्मजा ॥१२८॥

इति यवनभाषापारङ्गमविरचिते कथाकौतुके
चतुर्थं कौतुकम् ॥

॥ ४ ॥

प्रातरुत्थाय सा बाला प्राप्तसर्वमनोरथा ।
विज्ञायोन्मत्तभावं तं जातसंज्ञाभवत्तदा ॥१॥
प्राप्तं सर्वं तदालापाद्यत्तेनापहृतं बलात् ।
ततो बलं गृहं ज्ञेयं परात्मनि तु संम्मतिः ॥२॥

122c गत 125b ज्ञेयमाप्ति°

सुतोन्मत्तेव सा बाला यदि तेन कृताशया ।
तदाभाषणमाश्चर्यं श्रुत्वा स्मृतियतोत्थिता ॥३॥
कृतं स्वप्ने यदा देशनामनिर्णयमद्भुतम् ।
तदैव प्राप्तमनया चेतन्यादि मृगीदृशा ॥४॥
समाहूयैव तं दासीगणमाह सुमध्यमा ।
नैवं चिन्तां मदुन्मत्तभावज्ञां कुरुताधुना ॥५॥
गत्वा त्वरितमत्रैव पितरं कथयन्तु मे ।
तन्मनो दुःखसंपूर्णं रचयन्तु सुखान्वितम् ॥६॥
चैतन्यशरदद्यैयं प्राप्ता पूर्ववदेव मे ।
बहिर्हंसावलिस्तद्वन्नूनं मानसमागता ॥७॥
निर्मोचयतु मत्पादबन्धनं भूपतिस्स्वयम् ।
तत्करस्पर्शतो नूनं सुखमाप्नोति मानसम् ॥८॥
दुर्वर्णरचितं तूर्णमपाकुरुत बन्धनम् ।
उन्मत्तभावजं नूनं न भयं मेऽस्ति साम्प्रतम् ॥९॥
श्रुत्वैतद्वचनं भूपो दासीवदननिर्गतम् ।
प्रहर्षोत्फुल्लनयनस्तन्मन्दिरमुपाययौ ॥१०॥
दृष्ट्वा चैतन्यसंयुक्तां त्यक्तारागां मुदान्वितः ।
समानीयान्तिके त्वान्तां पुरस्तात्स न्यवेशयत् ॥११॥
नागपाशोपमं तद्बन्धनं कृतवान्पृथक् ।
स्नेहमन्त्रेण भूपालस्तत्पादनिधितस्स्वयम् ॥१२॥
तावद्दासीगणाः सर्वे ववन्दे चरणद्वयम् ।

12c भूपाल

दत्त्वा पादतले पादपीठं सौवर्णमुत्तमम् ॥१३॥
यदैश्वर्यमभूत्पूर्वं पुनस्तत्सर्वमर्पितम् ।
सख्यस्तन्मस्तके मौलिं स्थापयामासुरद्भुतम् ॥१४॥
सर्वास्सुमध्यमास्तत्र समायाता मुदान्विताः ।
तथा तन्मुखसौभाग्यदीपे याताः पतङ्गताम् ॥१५॥
तासां सवयसां मध्ये भूपालतनया ततः ।
निर्धूतकोकिलालापं वाग्विलासमथाकरोत् ॥१६॥
सख्यः शृणुत ना जाने मानसं किं सकौतुकम् ।
अन्यद्विहाय सकलं कर्तुं देशनिरूपणम् ॥१७॥
रोमश्यामादिकान्देशान्गणयामास तत्परा ।
मायायोन्मत्तभावेऽस्या दैवैस्सन्दर्शितानपि ॥१८॥
कृत्वा निरूपणं तेषां यावन्मेरुमुपागता ।
नेत्राम्बुभिरसिञ्चत्सा मेघपङ्क्तिरिवोर्वराम् ॥१९॥
मेरुनाम गरीयापि मूर्च्छितेवापतद्भुवि ।
तत्रत्याशेषमेर्वाख्यविषयवेगातुरा सती ॥२०॥
तत्प्रेमवशतो बाला चक्रे देशनिरूपणम् ।
मेरुमेरुेति कथनात्परं सुखमविन्दत ॥२१॥
अभूदहर्निशं कार्यमेतदेव मृगीदृशः ।
यदेतन्नामतद्देशवर्णनं क्रियते परम् ॥२२॥
सा वाणी मुखदा नित्यं तद्गुणो गीयते मया ।
नैवान्यत्सुकथालापमत्रैवावस्थिता तदा ॥२३॥

22c शेतान्नाग 23c नैवान्यत्सु°

तद्ध्यानं मानसे वाचि कीर्तनं श्रवणं श्रुतौ ।
तदीक्षणं च सर्वत्र तन्मयीवाभवत्तदा ॥२४॥
अभूद्यद्यपि सा बाला रागेणोन्मत्तरूपिणी ।
तथापि रूपकीर्त्यास्याः पूर्णं भूमण्डलं तथा ॥२५॥
यत्र यत्रापि तद्रूपकथा प्रादुरभूत्परा ।
शान्तात्मानोऽपि तां श्रुत्वा दोलारूढा इवाभवन् ॥२६॥
राजानो राजपुत्राश्च तदाप्यासक्तमानसाः ।
तत्सभासु च तद्रूपलावण्याख्यानमद्भुतम् ॥२७॥
तदा सर्वगुणोपेतास्सर्वे मानधनोर्जिताः ।
गृहीतुकामास्तन्वीं तामासन्नाकल्पशालिनः ॥२८॥
सापि रूपगुणोपेता यौवनोत्तमशालिनी ।
विहायोन्मत्तभावं तं यदा वृद्धिमुपागता ॥२९॥
तदा दूता नरेन्द्राणां नानादिग्भ्यस्समागताः ।
रोमश्याममहीपालकल्पा नेपथ्यभूषिताः ॥३०॥
दशानां भूमिपालानां तावन्त एव सेवकाः ।
संप्राप्ता नगरे, तस्य तैमोसस्य महात्मनः ॥३१॥
तेषामेकोऽथ सम्प्राप्तो गृहीत्वा परमाद्भुताम् ।
कोसलिकामेकद्वीपसमुत्पन्नार्थसंयुताम् ॥३२॥
अपरोऽपि तथैवैकसोलैमानस्य मुद्रिकाम् ।
आदाय समनुप्राप्तो भूपैश्वर्यनिदर्शनम् ॥३३॥
गृहीत्वान्येऽपि संप्राप्ता एकैकं वस्तु दुर्लभम् ।

---

33c समनुप्राप्ते. 33d °पैश्वर्य

यद्दृष्ट्वा स हि तां मत्वा मत्वमेव प्रदास्यति ॥ ३४ ॥
यत्र कुत्रापि सा बाला वदनं वर्तयिष्यति ।
विषयेषु स हि ख्यातो देशो देशशिरोमणिः ॥ ३५ ॥
यस्मिन्भूपे मनः सम्यक्साभिलाषं मृगीदृशः ।
स हि ग्रामटिकानाथो देशाधिपतिरुच्यते ॥ ३६ ॥
यस्मिन्देशे मनः स्यात्तु साभिलाषं मृगीदृशः ।
स हि ग्रामटिकातुल्यो देशाधिपतिरुच्यते ॥ ३७ ॥
भूपवर्यादि सन्धत्ते श्यामाख्ये नगरे सुखम् ।
तदानिशं प्रकुर्वन्ति तत्रत्यास्तु सदाशिषम् ॥ ३८ ॥
यदीयं रोमनामानं वाचा संवृणुते परम् ।
तड्डाख्यं नगरं यावद्दासास्तत्पुरवासिनः ॥ ३९ ॥
इत्थं समागताः प्रेष्या भूपालानां विशेषतः ।
ऐश्वर्यं कथयामासुस्तदर्थं प्रेषितास्तदा ॥ ४० ॥
एवं वृत्ते समावृत्ते वार्ता तावच्छ्रुता तया ।
व्याकुलं मानसं तस्यास्तदागमनचिन्तया ॥ ४१ ॥
पप्रच्छानन्तरं बाला दासदासीगणं तदा ।
अनेकनेमिदूतोऽपि प्राप्तो वा नेति कथ्यताम् ॥ ४२ ॥
तच्चिन्ता मानसे नित्यं तद्रागाकुलिताप्यहम् ।
मनो धावति मे तत्र किं फलं तं विना भवेत् ॥ ४३ ॥
यदि मेघागतो वायुर्वाति रेणुं किरन्मुहुः ।
मन्ये मृगमदं नूनं मुञ्चन्नेव प्रयात्ययम् ॥ ४४ ॥
एवं चिन्ताकुला यावद्भूपालतनया भवेत् ।

ज्ञनकेन समाहूता तावत्सा चारुलोचना ॥४५॥
शृणु कल्याणि मद्वाक्यं सर्वदुःखविवर्जितम् ।
सर्वलक्षणसम्पूर्णे नयनानन्दकारिणि ॥४६॥
स्तम्भभूता नृलोके ऽस्मिन्ये भूपा यशसान्विताः ।
ये ऽपि दुःखविनिर्मुक्ता नित्यं मुकुटधारिणः ॥४७॥
त्वच्चिन्तासक्तितास्ते ऽद्य त्वदाक्तिमनोधियः ।
त्वत्प्रेमवीज्ञं नियतं रक्षन्तः क्षेत्रसन्निधौ ॥४८॥
त्वदर्थं प्रेषिताः प्रेष्या भूपालैस्सुमहात्मभिः ।
कौसलिकां समादाय मत्सकाशमुपागताः ॥४९॥
शृणु वक्ष्यामि भूपानां वृत्तं सेवकवर्णितम् ।
तेषु को ऽपि भवेत्सुभ्रु प्रियस्ते तं वदस्व मे ॥५०॥
यस्मिन्देशे नृपेनापि साभिलाषं मनस्तव ।
तत्क्षणात्तं करिष्यामि वशगं चारुलोचने ॥५१॥
एव वदति भूपाले तूष्णीमेव नृपात्मजा ।
आसीत्तच्छ्रवणं पूर्वदृष्टकान्तपरंपरम् ॥५२॥
वरं तच्छ्रवणं भयाच्छ्रुन्दयुतं विशेषतः ।
कृतावधानं सततं परं मित्रकथाश्रुतौ ॥५३॥
दूतवृत्तं तु तत्सर्वं भूपालैश्वर्यसंयुतम् ।
कथयित्वाजिनमित्रनाम नात्त कथंचन ॥५४॥
न श्रुतं मित्रवृत्तान्तं कश्चिन्नाप्यागतस्ततः ।
निराशैवोत्थिता बाला त्यक्त्वा जनकदर्शनम् ॥५५॥
बाष्पमुक्तावलिं पक्ष्मवक्रनेन सा पुनः ।

कृतेन कलिकैवाभूद्रक्तपूर्णा तनुस्तथा ॥ ६७ ॥
असिस्रद्रुणी वाष्पधाराभिस्तत्र भामिनी ।
विभेद सहसा रोषपाषाणेन स्वमस्तकम् ॥ ६८ ॥
दृष्ट्वाद्भुतां तु तां प्रीतिं तस्या भूमिपतिस्तदा ।
अर्जेजमेन्नेण सम क्षणमेकमचिन्तयत् ॥ ६९ ॥
इयं मनोरमा बाला प्रथिता लोकमण्डले ।
अर्जेजमेन्नलुब्धापि स्वयं किं क्रियतेऽधुना ॥ ७० ॥
दत्त्वा पथक्पृथक्तत्र द्विगुणां भूपतिस्तदा ।
कोसलिकां नरेन्द्राणां प्रेष्यांस्तान्विससर्ज सः ॥ ७१ ॥
तामाद्यैव सहसा पूजितास्तेन भूभुजा ।
प्रत्याययुस्सुसन्तुष्टाः कथा सर्वे सदाशिपम् ॥ ७२ ॥

इति यवनभाषावारक्रमेन पण्डितश्रीवरेण विरचिते
कथाकौतुके पञ्चमं कौतुकम् ॥

॥ ५ ॥

बभूव सा तदा कान्तरागाङ्काङ्कितमानसा ।
तन्नामाग्रहणाद्बाला तद्वैगुण्यमवाद्धे ॥ १ ॥
दिवसस्याप्रकाशस्य ज्योतिस्सन्दृश्यते क्वचित् ।
निरालोकं दिनं तत्स्यान्निराण्य यत्र जायते ॥ २ ॥
यदा दृष्टं मनो राज्ञा तस्या मेन्नार्थमागतम् ।
तदा तत्प्राप्तये भूप उपायं समचिन्तयत् ॥ ३ ॥
कोऽप्यस्ति तादृशो लोके गत्वा मेन्नमितस्तु यः ।
भवेत्प्रीतिकरो बुद्ध्या जोलेखाजेजमेन्नयोः ॥ ४ ॥

गृहीत्वा मम सन्देशं याति प्रत्यानयिष्यति ।
तथैवाज्ञेनमेत्रेण मैत्रीं संजनयिष्यति ॥५॥
एकोऽतिनिपुणो दृष्टो राज्ञा निकटवर्तिनाम् ।
स्तुवन्तस्सततं यस्य बुद्धिं बुद्धिबलोर्जिताः ॥६॥
दत्त्वोपायनरत्नानि शतशोऽस्य करे नृपः ।
पत्त्रमेकं च तद्वृत्तसहितं विससर्ज तम् ॥७॥
प्राह भूमिपतिस्तावत्सन्देशं स्वयमग्रतः ।
त्वयाप्यज्ञेनमेत्रस्य कथनीयमिदं वचः ॥८॥
तवाप्यैश्वर्यमतुलं प्रत्यहं प्रथितं भुवि ।
लोके प्रियतया ख्यातं नाम सैवाधिका भवेत् ॥९॥
परं शशिमुखा श्यामा कन्यास्त्यस्मन्महीभुजः ।
सकलङ्को मृगाङ्कोऽयं ज्ञातो यद्रूपसाम्यतः ॥१०॥
यां स्वयं विहितां धाता ज्ञातोत्कण्ठो निरीक्षितुम् ।
ताराच्छलेन नेत्राणां शतान्याविष्करोत्यतः ॥११॥
नैकेनापीक्षितं जातु यन्मुखं दर्पणं विना ।
यस्या निर्मलतासाम्यं न कुर्वन्ति हिमादयः ॥१२॥
पिधाय वाससा वक्त्रं पश्यत्येव सुधाकरम् ।
करावलिर्यथा नास्य ज्ञायते दाहकारिणी ॥१३॥
मुखं स्पर्शयितुं शक्तो न वायुरलकान्वितम् ।
स्वात्मीयामपि यच्छायां विलोकयति नापराम् ॥१४॥
सम्पूर्णेन्दुमुखी बाला नित्यं हर्म्यस्थितापि या ।

8a भूमिरा°. 14b °न्विता.

न करोत्यपरं कर्म विना पाञ्चालिदेवनम् ॥१५॥
यस्यास्सौगन्ध्यसाम्यार्थं सुमनांसि जितान्यपि ।
बद्धात्मानं लतास्वेव कुर्वन्ति तप उत्तमम् ॥१६॥
वल्गत्येव कदाचित्सा घाणत्कनकनूपुरा ।
अन्तरेव बहिश्शब्दो जायते बहुधा नृणाम् ॥१७॥
प्रवेशं कुरुते तत्र वेषकर्मणि कोविदा ।
सैरन्ध्री नापरः कश्चित्कदाचिज्जनकोऽपि वा ॥१८॥
एवंविधापि भूपाल राजेन्द्रतनया परा ।
देवकन्येव सा भाति रूपशीलगुणान्विता ॥१९॥
सर्वे भूपतयस्तस्यां समाहितमनोधियः ।
त्यक्त्वान्यकरणीयानि तच्चिन्तनपरायणाः ॥२०॥
रोमकाधिपतेर्दूतस्तथा श्यामस्य भूपतेः ।
तदर्थं भूप सम्प्राप्तो गृहीत्वोपायनं महत् ॥२१॥
केनापि नृपवर्येण सह सा सहसाकरोत् ।
नाडीकारं नृपसुता प्रार्थितापि नरोत्तमैः ॥२२॥
न मनो रोमके लग्नं तथा राजसुता नृप ।
श्यामाख्यं गणयामास नगरं कृपणं यथा ॥२३॥
नेत्रद्वन्द्वं परं यस्या मेलार्थं जलदोपमम् ।
तन्नाम संगृहीत्वेव मतकल्पेव जायते ॥२४॥
न जाने साभिलाषा किमनु मेलं सुमध्यमा ।
त्यक्त्वान्यत्सकलं सौख्यं तद्धतं किमीदृशम् ॥२५॥

---

18b वेष॰. 23b राजसुता नृप

सत्यं तदम्भसा किं वा तद्भवा रचितावला ।
धात्रा जीवनमस्यैवं लिखित्वात्र समर्पितम् ॥२६॥
यदि त्वन्मानसे राजन्प्रिया सा तनुमध्यमा ।
इतो गत्वा नयिष्यामि क्षणेनैतां तवान्तिकम् ॥२७॥
यदि नैषा सुरूपा ते प्रिया भवितुमर्हति ।
त्वद्गृहे राजतनया दासीकर्म करोत्वियम् ॥२८॥
तच्छ्रुत्वाजिनमेतो ऽपि सन्देशं परमाद्भुतम् ।
हर्षेण महता युक्त उच्चैरकरोच्छिरः ॥२९॥
विधाय प्रणतिं प्राह धावाहं द्या स महीपतिः ।
तत्सन्देशोद्भवां चिन्तां धारयामि कथं हृदि ॥३०॥
तथापि तव राजा मामुत्थापयति भूमितः ।
शोभते यच्चहं साम्यं करोमि विधिना सह ॥३१॥
न तच्चित्रं नरेन्द्रो मां यत्तु दग्धतृणोपमम् ।
सुदृष्टिश्रद्धयावृष्ट्या पुनः संजीवयिष्यति ॥३२॥
यदि जिज्ञासकर्म्मं च सबलं मुखमध्यगम् ।
नाहं तदा स्तुतिं कर्तुं शक्तो भूमिपतेस्तव ॥३३॥
भाग्यं फलितमेतन्मे सफलं धर्मकर्म च ।
सम्भावितो नरेन्द्रेण कार्ये ऽस्मिन्नद्भुतमत्र यत् ॥३४॥
गच्छामि शिरसा तत्र रचयामि पुनः पुनः ।
प्रणतिं किं तु शृण्वेकं कारणमत्र मे सखे ॥३५॥
पराधीनो ऽस्मि सेवायां रुद्धो ऽहं स्वामिना तथा ।
यथा न क्षणमेवैकं गन्तुं कुत्रापि शक्तिमान् ॥३६॥

क्षणमेकं यदि मया स्थीयते स्वेच्छया क्वचित् ।
न जाने किंयदेवायं मन्यतेऽपकृतिं मम ॥३७॥
क्षम्यतामपराधोऽयं मम मोहाल्पचेतसा ।
नृपेण संशयो वापि न कर्तव्यः कथंचन ॥३८॥
यदि वक्ष्यति भूपालो विवाहार्थं मयाधुना ।
प्रहीयतेऽत्र सौवर्णकर्णिरिवशतद्वयम् ॥३९॥
दासदासीगणाश्चैव कञ्चुकोष्णीषधारिणः ।
मागधा वन्दिनश्चैव बालवृद्धपुरस्सराः ॥४०॥
महाजना धर्मपरास्सर्वे मत्पुरवासिनः ।
समानयन्तु तां कान्तां निर्गच्छन्तु ममाज्ञया ॥४१॥
यदि तु प्रोच्यतां तत्र मदर्थं वचनं सखे ।
न तं मुञ्चति भूपालः क्षम्यतां नृपसत्तम ॥४२॥
इति चिन्तातुरं दृष्ट्वा प्राह दूतो महामतिः ।
विधाय प्रणतिं पूर्वं सान्त्वपूर्वमिदं वचः ॥४३॥
अहो राजेन्द्र ते लक्ष्मीः प्रथिता लोकमण्डले ।
धर्मार्थैकफला नूनं वर्धमाना भवत्वियम् ॥४४॥
तथापि मम भूपालः ख्यातस्त्रिभुवनेऽव्ययम् ।
तदग्रे श्रीमतां लक्ष्मी को वक्तुं शक्तिमान्भवेत् ॥४५॥
गृहे तु नृपवर्यस्य दासदासीगणान्मुहुः ।
शक्तो गणयितुं को वा यथा तारा नभस्तले ॥४६॥
यत्रायाति सभामध्ये रत्नान्युन्मालिकापरः ।
ददात्यगणितान्येवमर्थिभ्यस्सिकता यथा ॥४७॥

सेवकेभ्यस्तथा भूपो वस्त्राण्याभरणानि च ।
असंख्यानि यथा वृक्षः पत्त्राणि प्रददात्ययम् ॥४८॥
परं तस्याभिलापोऽयं यथा प्रीतिस्त्वया सह ।
जायते न तु वहद्दिदर्शनेऽस्ति मनोरथः ॥४९॥
एवंविधोऽपि भूपालः प्रथितो यशसा भुवि ।
वदाज्ञिकाभिलाषोऽस्ति तूर्णमाज्ञापयस्व तत ॥५०॥
तथेत्यङ्गेशमेत्रेण कथिते हर्षपूरितः ।
प्रत्यायातः स्वनगरं गृहीत्वोपायनं महत् ॥५१॥
श्रुत्वा दूतमुखाद्वाक्यं जातानन्दो महीपतिः ।
अमन्यतैकमात्मानं निर्मुक्तमिव बन्धनात् ॥५२॥
नेतुं विकासं तद्भाग्यपुष्पं वह्नमनोरथः ।
विधातृमधुमासोऽयं प्रसन्नोऽभून्मृगीदृशः ॥५३॥
संजाता स्वप्नमध्येऽपि बाला बन्धनवर्जिता ।
अद्भुतं भाग्यवशतः प्रत्यक्षं मोचिता स्वियम् ॥५४॥
स हि धन्यो नलोकेऽस्मिन्नसत्यमिव मन्यते ।
इदं सर्व महाबुद्धिर्यो नित्यं योगतत्परः ॥५५॥
कथं मायामयं स्वप्नं सत्यं जानाति बुद्धिमान् ।
दृष्ट्वापि तत्फलाकाङ्क्षी न स्याद्यदि सुखी भवेत् ॥५६॥
दृष्ट्वा स्वतनयां हर्षयुक्तां राजशिरोमणिः ।
तदर्थं रचयामास विवाहरचनां तदा ॥५७॥
पूर्वं तु कल्पयामास स्वर्णरत्नमयं ततः ।

57b °युक्तो.

सहस्रमेकं क्रीडार्थं पाञ्चालीनां महीपतिः ॥५८॥
एवं दासीसहस्रं तु दिव्यरूपं महामना ।
तथा रत्नमयं चैकं ताटङ्कानां नरोत्तमः ॥५९॥
केयूरकटकादीनि संख्याविरहितान्यपि ।
सहस्रं मुकुटानां च महार्घमणिसंस्कृतम् ॥६०॥
एकैकं वस्तुरत्नानां सहस्रं धरणीधवः ।
समानयामास पुरो ददर्श स्वयमादृतम् ॥६१॥
सहस्रमश्वरत्नानामुद्राश्वतरदन्तिनाम् ।
तथैव कल्पयामास प्रत्येकं स महीपतिः ॥६२॥
तथा सौगन्ध्यसंयुक्तं यावद्द्रव्यं सुदुर्लभम् ।
तावदानाययामास तदर्थं राजकुञ्जरः ॥६३॥
तस्मिन्निष्पादिते कार्ये सन्तुष्टः पार्थिवोत्तमः ।
आज्ञापयामास ततः स्वयमाहूतमन्त्रिणः ॥६४॥
एकं कर्णीरथं दिव्यं विमानोपममद्भुतम् ।
परं नालोकितं जातु संवाह्यत सत्वरम् ॥६५॥
इति भूपवचः श्रुत्वा प्रणमन्तो मुहुर्मुहुः ।
तथा ते रचयामासुस्तदद्भुततरं भुवि ॥६६॥
रत्नस्तम्भमयं रम्यं सुवर्णकृतबन्धनम् ।
तथा दृढतरं सूक्ष्मवासतशतसंकुलम् ॥६७॥
समानीयैव पुरतः कौतूहलशतान्वितम् ।
तत्तदा दर्शयामासुर्द्द्राभूत्सोऽपि विस्मितः ॥६८॥

---

65b विमानमुत्तमं.　　65d सत्वरया

निधाय तत्र तां बालां पाञ्चालीभिस्सहोत्तमाम् ।
सदा तत्केलिनिरतां नवयौवनशालिनीम् ॥६९॥
दासदासीगणयुतां प्राप्तकामां सुमध्यमाम् ।
मेरुं प्रस्थापयामास तनयां पार्थिवोत्तमः ॥७०॥
पितरावभिवन्द्याथ हर्षोत्पिन्नास्रवर्षिणी ।
शोलेखा निर्जगामाथ श्रिया परमया युता ॥७१॥
तथा प्रासाधिकास्सर्वा बालामनु प्रसाधनम् ।
कन्या विनिर्गतास्तारासुराज्ञशशिकलामिव ॥७२॥
काचिद्दासेरकारूढा काचिदश्वस्थिता ययौ ।
अपरा स्वयमेवासीत्तथापि गजगामिनी ॥७३॥
तथैव सेवकास्तस्या उष्ट्राश्वगजगामिनः ।
प्रययुर्वलाचक्रं रक्षन्तः शस्त्रपाणयः ॥७४॥
वीणावेणुनिनादेन मृदङ्गस्वनितेन च ।
कलालापेन चैतासां प्रतिध्वानितमम्बरम् ॥७५॥
गायन्त्योऽपि हसन्त्यश्च क्रीडन्त्योऽपि परस्परम् ।
तास्तथा हर्षसंयुताः प्रययुस्तं पुरं प्रति ॥७६॥
तथा भूपालतनया सुखिताभूत्सुमध्यमा ।
तस्याश्चान्तरजं दुःखं यथा नैवान्वमन्यत ॥७७॥
चिन्तारात्रेर्नृणां नूनं हर्षमित्रोदया भवेत् ।
विप्रयोगभयस्यापि सामीप्याभयता तथा ॥७८॥
तस्या नृपसुतायास्तु मैत्र्याभवद्दलपिटता ।

72c विनिर्गता तारा?        73a काचिद्दासेरका?

न ददर्श सुहृत्प्राप्तिव्युष्टं यस्यां सुलोचना ॥७९॥
संप्राप्य निकटं तस्य नगरस्य नृपात्मजा ।
तत्रैव स्थापयामास बलं बुद्धिबलोर्जिता ॥८०॥
श्रमं मार्गोद्भवं दूरीकर्तुं यावदवस्थितम् ।
तत्क्षणमेकं बलं तावद्दिवसोऽस्तमुपाययौ ॥८१॥
निशां तामतिवाह्यैकां प्रभाते भूपकन्यका ।
पार्श्वे साज्ञसमस्तस्य प्रेषयामास सेवकम् ॥८२॥
स त्वं शीघ्रमितो गत्वा सन्देशं प्रापयाधुना ।
तथास्य लोकनाथस्य कथनीयमिदं वचः ॥८३॥
शोलेखा नाम तनया तैमोसस्य महात्मनः ।
त्वदाज्ञयेह सम्प्राप्ता त्वया सम्भाव्यतामियम् ॥८४॥
श्रुत्वा दूतमुखाद्वाक्यं प्रहर्षोत्फुल्ललोचनः ।
श्रमन्यतिक्रमात्मानं लोकेऽस्मिंल्लोकनायकः ॥८५॥
दुन्दुभिं ताडयामास नगरेऽत्रेतमेन्नकः ।
सर्वलोका बहिरितो निर्गच्छन्तु ममाज्ञया ॥८६॥
गजवाजिसहस्रौघैरनेकैस्साहितास्तथा ।
गृहीत्वा दुर्लभं वस्तु लोके सर्वं समन्ततः ॥८७॥
समानेतुं स्वयं सोऽपि निर्गतः सेवकैर्वृतः ।
तां भूपालसुतां रम्यां सर्वलक्षणसंयुताम् ॥८८॥
ततस्तदाज्ञया सर्वे निर्गताः पुरवासिनः ।
नानातौर्यार्यकुशला नानोपायनपाणयः ॥८९॥

---

86b तेजमेन्नक

सर्वालङ्कारसंयुक्ता अप्सरस्सदृशा भुवि ।
तदैव निर्गतास्सर्वा नर्तक्यो नृत्ततत्पराः ॥ ९० ॥
गायन्त्यो गायकाश्चैव गन्धर्वोपमनिस्स्वनाः ।
तदाज्ञया विनिर्याता गीतशास्त्रविचक्षणाः ॥ ९१ ॥
नानार्थकुशलास्तद्वत्सूतमागधवन्दिनः ।
निर्ययुर्नगरात्तस्मात्तदाज्ञावशवर्तिनः ॥ ९२ ॥
कुहका मान्त्रिकाश्चैव ये चान्ये मायिनः परम् ।
स्वमायां दर्शयन्तस्ते निर्गतास्तद्वशास्तदा ॥ ९३ ॥
वेणुवीणामडड्डानां निस्स्वनेन समाकुलम् ।
शुशुभे तद्बलं तत्र देवसेनोपमं भुवि ॥ ९४ ॥
कुतूहलशताविष्टा यथा राजसुतागता ।
तथैवाज्ञिमिश्रोऽपि निर्गतो दर्पपूरितः ॥ ९५ ॥
एवमेव तदा सर्वे दर्पापूरितमानसाः ।
गायन्तश्च हसन्तश्च प्रापुस्तन्निकटं शनैः ॥ ९६ ॥
यावत्प्राप्तोऽन्तिकं तारपल्लीवलयितं पुरः ।
तावदेकं ददर्शासौ स्थलं ताराधिपायमम् ॥ ९७ ॥
अवरुह्याथ वाहात्तत्संमखं रचयन्मुकुः ।
प्रणतिं प्रययौ दर्पपुलकाङ्कितविग्रहः ॥ ९८ ॥
दृष्ट्वा तमागतं भूपं दासास्तस्या मृगीदृशः ।
सभाजनायोपगताः प्रणेमुर्मुदिताशयाः ॥ ९९ ॥
गृहीत्वा प्रणतिं तेभ्यो दत्वा तद्वत्सदाशिषः ।
कुन्ददन्तांशुनिर्भूपस्तत्राभूद्वसितानननः ॥ १०० ॥

पत्रच्छायामयंस्तेषां दर्पणोत्फुल्ललोचनः ।
कश्चिन्मार्गोद्भवं कष्टं नासं दूरागतैः परम् ॥१०१॥
ततोऽप्युपायनार्थं तदस्थानीतं स्वकेच्छया ।
तदग्रे स्थापयामास त्रिदिवेऽपि सुदुर्लभम् ॥१०२॥
तथा तत्सेवकान्सर्वान्यथायोग्यतया नृपः ।
ततः सम्भावयामास प्रीतिमानधनादिभिः ॥१०३॥
एवं सोऽब्रेहमेस्तस्तान्पूजयित्वा पृथक्पृथक् ।
तत्रैवैकां निशां तस्थौ प्राप्तपूर्णमनोरथः ॥१०४॥
अतिवाह्यैव तां रात्रिं कथाभिर्मुदिताशयाः ।
प्रातर्मनः प्रवेशाय दधुर्भूपपुरे ततः ॥१०५॥

इति यवनभाषापारङ्गमपण्डितश्रीवरेण विरचिते
कथाकौतुके षष्ठं कौतुकम् ॥

॥ ६ ॥

दर्शयन्नन्यथा कालकुहको ऽपरथा स्थितम् ।
किंचिद्विभात्ययं लोकविलुण्ठनविचक्षणः ॥१॥
आशालुब्धं मनः पूर्वं करोत्येकत्र मायया ।
पुनस्तदेव नैराश्यवशेनायं मुहुःस्थितम् ॥२॥
दर्शयत्येव मधुरं किमस्यास्तु फलं पुनः ।
यद्बुद्ध्वा जीवलोकोऽयं तिक्तास्यो जायते परम् ॥३॥
एवं प्रातस्तदाब्रहिमसौ यावत्समुत्थितः ।

---

101a [illegible]   101d [illegible]°   103b [illegible]
104a [illegible]°.   105b °[illegible]   105c [illegible]

गन्तुं स्वनगरं सर्वान्समादयेव सत्वरम् ॥४॥
तावत्स्वन्तान्तरस्थेयं बाला हरिणलोचना ।
प्रोवाच वचनं धात्रीं तदुत्कण्ठाकुलाशया ॥५॥
उपायः क्रियतां मातर्येन पश्याम्यहं प्रियम् ।
विनैतद्दर्शनं काचिद्गतिर्नैवास्ति मेऽधुना ॥६॥
जलं प्राप्य तृषार्तोऽपि न तत्पानं विना क्षमः ।
यथैव विद्धि मां मातस्तथैतद्दर्शनं विना ॥७॥
तां दृष्ट्वोत्कण्ठितां बालां तत्रोपायेन साकरोत् ।
स्थले रन्ध्रं विवृत्यैकं नेत्रमात्रं मनीषया ॥८॥
चक्रे तेनैव मार्गेण दर्शनं पार्थिवात्मजा ।
दृष्ट्वाजिनमेवं तमत्यजच्छ्वाससन्ततिम् ॥९॥
हा मातर्विहितं किं नु वेधसाद्भुतकर्मणा ।
ममैव मन्दभाग्याया विपरीतं सुदुःखदम् ॥१०॥
हा कष्टमद्भुतं कर्म विहितं विधिना मम ।
असमाप्तं गच्छ यावद्वित्तिर्निष्पतिता कथम् ॥११॥
न हि सोऽयं मया दृष्टः स्वप्ने यो लोकसुन्दरः ।
यदर्थं विहितं मात इयदन्वेषणादिकम् ॥१२॥
न हि सोऽयं सुचैतन्यं येन मेऽपहृतं बलात् ।
विधायात्यद्भुतां मायां जडता प्रतिपादिता ॥१३॥
न हि सोऽयं त्रिलोकेऽपि मामेवोन्मत्तरूपिणीम् ।
नीत्वा पुनः स्मृतिं कृत्वा नामदेशनिरूपणम् ॥१४॥

---

5c धात्रो. 12a से. 11c स्मृति.

हा कष्टं धिगिदं भाग्यं सदा सुखविवर्जितम् ।
तथैव मामकं जन्म निन्दितं चिन्तयान्वितम् ॥१५॥
मया खर्जूरवृक्षो हि रोपितः फललब्धया ।
तत्रैवाधिगतं किं तु प्राप्ता कण्टकसंहतिः ॥१६॥
मनःक्षेत्रे मयोप्तं तु सुखबीजं स्वयेच्छया ।
परं त्वधिगतं मातः कथं दुःखफलं त्विदम् ॥१७॥
प्रत्यहं कृपणीवाहं निधानार्थं कृतश्रमा ।
लब्ध्वापि तत्कथं कार्यं पतितं भुजगैस्सह ॥१८॥
कुसुमावचयं कर्तुमुद्याने प्रस्थितास्म्यहम् ।
न तदाप्तं परं जातं कण्टकैर्व्यथितं वपुः ॥१९॥
अहो चिन्तातुरैवाहं तापितापि मरुस्थले ।
गच्छन्ती शुष्ककण्ठोष्ठतालुजिह्वा तथा परम् ॥२०॥
दैवाद्दृष्ट्वापि स्वच्छाम्भः पतिता पुनरुत्थिता ।
पातुं समागता यावत्तावत्पङ्कायितं जलम् ॥२१॥
गच्छते यदि लीलार्थं शशकोऽपि मया पुनः ।
मदर्थं विक्रमोदारः सोऽपि सिंहायते परम् ॥२२॥
शोकाम्भोधौ निमग्नास्मि चित्तोर्मिशतसंकुले ।
क्वचिदूर्ध्वं प्रयातापि तथैवाधः क्वचिन्मुहुः ॥२३॥
यदि शोकाम्बुधौ दैवात्प्रकाशातरी क्वचित् ।
तदैव दर्पसंयुक्ता पूर्णार्वा सम्भवाम्यहम् ॥२४॥
पुरा स्वप्नेऽभवत्कान्तसामीप्यं सुखितं मम ।

16a om हि    19c [illegible]

स्मारं स्मारं तदेवाद्य कालोरगनिभं मुहुः ॥२५॥
सत्यं चिन्तान्विता लोके नास्त्यन्या कापि मां विना ।
तथैव दुःखितानां च परं दुःखपरायणा ॥२६॥
नास्ति मेऽद्य मनो वश्यं मनोहर्ता न हस्तगः ।
अत एव स्वयं वक्षः कराभ्यां ताडयाम्यहम् ॥२७॥
क्रौर्यं मुञ्चाधुना धातः स्नेहार्द्रं हृदयं कुरु ।
अबलादलनान्नूनं किमैश्वर्यं भविष्यति ॥२८॥
यदा न दीयते मह्यं कान्तवासः करे शुभम् ।
तथैव मा कुरुबाला मनो मे परकाङ्क्षितम् ॥२९॥
मा विदारय तच्चिन्तानखाग्रेणांशुक मम ।
परस्परकरस्पर्शमलिनं वापि मा कुरु ॥३०॥
किं तु केनापि शपथं विहितं यत्पुरा मम ।
प्रापयान्तं तदेवाद्य वैपरीत्यं वृथा विदम् ॥३१॥
दाहं मा कुरु कामाग्निज्वालया मम संप्रतम् ।
चिन्तोरगपरीताङ्गं निधानमिव मद्वपुः ॥३२॥
एवं चिन्तातुरा बाला बाष्पाकुलितलोचना ।
क्रन्दमानापि करुणं मूर्च्छितेवापतद्भुवि ॥३३॥
तावत्समुत्थितां वाणीं शुश्राविता नृपात्मजा ।
अभ्युत्तिष्ठ महाभागे त्यज चिन्तां सुदुःस्थिताम् ॥३४॥
प्रियो नात्रेनमेवस्ते विनीतं नाधिगच्छसि ।
कान्तमस्मात्स ते भर्ता प्रसिद्धिमुपयास्यति ॥३५॥
मा भूद्वेगसङ्गोत्थभयं ते चारुलोचने ।

अतोऽप्यक्षतशान्तिव भविष्यसि वराङ्गने ॥३६॥
ख्यातः पुरुषरूपेण रक्षितः तद्गुणैरयम् ।
तस्मात्सुभ्रु न कर्तव्या चिन्तैतत्सङ्गमोद्भवा ॥३७॥
इति श्रुत्वा वचो दिव्यं धरणीधवपुत्रिका ।
प्राप्तसंज्ञा बभूवाथ विस्मयाविष्टमानसा ॥३८॥
विहायाक्रन्दनं तत्र त्यक्तवाष्पारुणेक्षणा ।
रूपदर्पयुता बाला तदाभूत्तनुमध्यमा ॥३९॥
विधाय सकलां रात्रिं रोदनं भूपकन्यका ।
प्रतीक्षन्तीव तद्वाक्यं धैर्ययुक्ता बभूव सा ॥४०॥

इति यवनभाषापारङ्गमपण्डितश्रीवरेण विरचिते
कथाकौतुके सप्तमं कौतुकम् ॥

॥ ७ ॥

प्रातरभ्युदिते सूर्ये प्राचीमस्तकशेखरे ।
दक्षिणोत्तरदिक्सुभ्रुकर्णसौवर्णकुण्डले ॥१॥
पश्चिमामुखशुद्धाग्निशिखासुतिलके पुनः ।
अपारगमनाम्भोधिसंचरत्स्वर्णसागरे ॥२॥
व्योममानसताराघहंसश्येनायिते तथा ।
क्षिप्ता तमोऽनेकोभ्रपदत्ताष्टापदडुन्दुभौ ॥३॥
रूपेण महता युक्तो मौलिमण्डितमस्तकः ।
सर्वानानाययामास सामन्तान्स नराधिपः ॥४॥ चतुरन्तम्
विधायात्यद्भुतां भूषां विवाहसमयोचिताम् ।

3b °शोभाग्र     3c तथा द्भुत°     5a विधाय°

तैरेव सहितोऽजेजमेखोऽसौ प्राविशत्सभाम् ॥५॥
शुशुभे स सभामध्ये वज्रपाणिरिवापरः ।
ध्वजच्छत्त्रपताकाभिः सहितोऽद्भुतदर्शनः ॥६॥
अद्भुतं तस्य तच्छत्त्रं दिव्यैश्वर्यसमन्वितम् ।
यच्छायामधिगम्यैव नरो राजा भवेद्भुवि ॥७॥
कृतं नीराजनं तावत्सेवकैर्मणिभिः परम् ।
तैरेव पतितैर्भूमौ सार्थकेयं वसुन्धरा ॥८॥
तस्मिन्क्षणे महानासीदानन्दः पुरवासिनाम् ।
नर्तक्यो ननृतुस्तत्र नानागतिविशारदाः ॥९॥
वीणावेणुमृदङ्गानां निस्स्वनस्सुमहानभूत् ।
मिलितानां च लोकानां तदा तस्मिन्महोत्सवे ॥१०॥
गजवाजिसमाकीर्णं पदातिगणसंकुलम् ।
स्थानं तच्छुशुभे तत्र परानन्दमयं शुभम् ॥११॥
जोलेखांसेवकास्तत्र हर्षिताः परमाद्भुतम् ।
मन्यमानाः कथं बाला मुक्तेत्युन्मत्तभावतः ॥१२॥
तद्दिवाजेजमेखोऽपि महाहर्षसमन्वितः ।
तदाभ्या सफलं जन्म जानन्स्वकमरिन्दमः ॥१३॥
परं भूपालतनया मध्ये कर्णारिथे स्थिता ।
एकैव दुःखिता तत्र दूषयामास वेधसम् ॥१४॥
बत किं विहितं धातस्तव सत्यं मया हितम् ।
यत्तु मां दुःखितामेव कथं नयसि दुःखताम् ॥१५॥

---

7c °तिमेव°. 8b गेजर्फे.

न जाने विहित किं ते कार्यं प्रत्यपकारतः ।
येन शोकाम्बुधौ मग्नां निमज्जयसि मां मुहुः ॥१६॥
प्रथमं स्वप्नमात्रेण मनो मेऽपहृतं त्वया ।
अविचारेण चिन्तापि वितीर्णा बहुशस्त्वया ॥१७॥
त्वयैवोन्मत्ततां नीता बन्धनेनापि बन्धिता ।
प्रसन्नेनापि चैतन्यं त्वयैवोन्मोचिता पुनः ॥१८॥
नैतज्ज्ञातं स्वबुद्ध्या यद्दयितान्वेषणादिकम् ।
विहितं त्वामनाश्रित्य तदेवापकृतायितम् ॥१९॥
दुःखमेकं तु सप्राप्तिनैराश्यं मम साम्प्रतम् ।
द्वितीयमपि संजातं नृपातिक्रमदर्शनात् ॥२०॥
निर्दयेन त्वया नित्यं कृतं मेऽपकृतं बहु ।
उपकारोऽधुना कार्यः कुरु मैवं शुभाशुभम् ॥२१॥
मोहितात्र त्वया स्वप्ने किंचिद्दर्शयताद्भुतम् ।
वदसीति पुनः कामं मामवाप्स्यसि मोहयन् ॥२२॥
इति भूपालतनया चिन्ताशतसमाकुला ।
वहिः प्रादुरभूच्छब्दस्तावद्दासीमुखोद्गतः ॥२३॥
इह प्राप्तोऽद्य भूपालस्त्वदर्थं वरवर्णिनि ।
नीलापगातीरभूमिसन्यवेशितसैनिकः ॥२४॥
इति श्रुत्वा च भूपालतनया व्याकुलाशया ।
तदेवालोकयामास तं नृपं चारुलोचना ॥२५॥
संप्राप्य दर्शनं तस्या दर्पितोऽभून्नरोत्तमः ।
चकाराराधिकं रवेः मध्याविरहितैस्तदा ॥२६॥

विधाय स्वर्णपात्रेषु मणिमुक्तादिकं परम् ।
तथैव सेवकास्तस्याश्चक्रुर्नीराजनं ततः ॥ २७ ॥
पतितैर्मणिभिस्तत्र सम्पूर्णाभूद्वसुन्धरा ।
चलितुं न यथा शक्तो लोकौघः प्रस्खलद्गतिः ॥ २८ ॥
अमदाजिधुरत्नुणारत्नसद्वर्पनिर्गताः ।
तथा वह्निशिखास्तत्र प्रादुर्भूतास्सहस्रशः ॥ २९ ॥
नीलापगापि सा तत्र प्रथिता जवशालिनी ।
पूर्णाभून्मणिमुक्ताभिस्सिकताभिरिवापरा ॥ ३० ॥
एवं भूपालतनया रूपेणाप्रतिमा भुवि ।
आनीताजिनमेखेण श्रिया परमया युता ॥ ३१ ॥
ततस्तत्कौतुकं रम्यं नानाकौतुकसंयुतम् ।
अमन्यत तदा भूपसुता कारागृहोपमम् ॥ ३२ ॥
सापि तद्विप्रयोगात्तु रत्नपर्यङ्कमास्थिता ।
कुसुमास्तरणोपेतं वेद कण्टकसंयुतम् ॥ ३३ ॥
तथैव मुकुटं दिव्यं नानारत्नोपशोभितम् ।
अमन्यताद्भुतं बाला गिरिभारोपमं तदा ॥ ३४ ॥
सर्वाण्याभरणान्येवं जातरूपमयान्यपि ।
मन्यमानाबला वह्निविस्फुलिङ्गाकृतीन्यतः ॥ ३५ ॥
चिन्तया मानसं यस्य युतं प्रियसमुत्थया ।
लभते न सुखं जातु त्रिदिवेऽपि कदाचन ॥ ३६ ॥
कश्चिदेव रणे शक्तः स्यातुं वीरशिरोमणिः ।

---

30d सकताभि°.

शिरांसि यत्र शूराणां पतितानि सहस्रशः ॥३७॥
यदि चक्षुर्भवेत्पूर्णं त्वग्येणाकृतदर्शनम् ।
तदा सौभाग्ययुक्तायास्तारायाः किं प्रयोजनम् ॥३८॥
चित्तं चेतोहरेणैव मिलितं यदि दैवतः ।
न जातु परसामीप्ये साभिलाषं भविष्यति ॥३९॥
पश्य सूर्यप्रकाशेऽसौ पतङ्गः स्नेहसंयुतः ।
न तथा जायते दीपशिखासंसक्तमानसः ॥४०॥
सन्ति सौगन्ध्ययुक्तानि सुमनांसि न तेष्वयम् ।
रसायुः प्रीतिमादत्ते मालतीकुसुमेषु या ॥४१॥
तथा कमलिनी भानुकिरणासक्तमानसा ।
सुधांशुं नयनानन्दकारिणं नेक्षते क्वचित् ॥४२॥
एवं साजेनमेन्स्य गृहे राजसुता सुखम् ।
नामन्यत तदा स्वप्नदृष्टकान्ताभिलाषिणी ॥४३॥
तस्मिंस्तु मन्दिरे दासदासीगणसमाकुले ।
नित्यप्रमुदिते सैका चित्रस्थेवाभवत्तदा ॥४४॥
सौविदल्लास्तदा चक्रुः शङ्कया शङ्किताः परम् ।
नानाप्रहरणोपेता रक्षां धर्मपरायणाः ॥४५॥
एवं निशान्तनारीणां तदा सवयसामपि ।
दासीनां चैव सा बाला विशेषं नान्वमन्यत ॥४६॥
सततं रचयन्त्येव तदर्थं शयनं शुभम् ।
अमन्यत स्वयं बाला काष्ठवास्तरणोपमम् ॥४७॥
सखीभिस्सह सा तत्र मिथ्यैवालापतत्परा ।

किं तु कान्तगुणाख्यानरसासक्तमनोरथा ॥४८॥
तन्मध्येऽपि हसन्त्येवं मुधा परमया मुदा ।
हृदये चिन्तयोपेता विह्विताक्रन्दना परम् ॥४९॥
मध्ये सखीजनस्यापि मूर्त्यैवासीत्प्रतिष्ठिता ।
तथापि मनसा कान्तध्यानशीलेव साभवत् ॥५०॥
एवं राजेन्द्रतनया दिवसानि निनाय सा ।
अविज्ञाताशया ताभिः सवयोभिः कथंचन ॥५१॥
गर्जिताक्रन्दनपरा श्वाससौदामिनीयुता ।
विगलद्बाष्पधारौघा साभून्मेघानुकारिणी ॥५२॥
सान्त्वयन्नेव दयितं गिरा मधुरया तदा ।
सा तु तद्विप्रयोगार्ता प्रोवाच वचनं शुभम् ॥५३॥
स्वयं मेरुाख्यया नाथ कृतं देशनिरूपणम् ।
पूर्वं प्रियतया ख्यातं नामापि कथितं त्वया ॥५४॥
मयात्तं सकलं किं तु विपरीतमिदं कथम् ।
कथं त्वद्दर्शनं नूनं मम भाग्यवशे न तत् ॥५५॥
न जानेऽद्य कियत्कालं ज्वलितेनाप्यहर्निशम् ।
त्वद्वियोगाग्निना कान्त दह्यते मामकं वपुः ॥५६॥
मधुवन्मानसोद्यानं विकासं मे नयाधुना ।
वपुः स्नेहौषधेनापि रक्ष चिन्तामयान्वितम् ॥५७॥
त्वदनास्थाकृतं कार्यं पूर्वमासीत्त्वया पुनः ।
साधितं मे विधायैव देशनामनिरूपणम् ॥५८॥
श्रुत्वैतद्भाविताशा मे जीवितेशाभवत्तदा ।

प्राप्यते नियतं कान्तः कुतोऽपि हृदि निश्चयः ॥५९॥
यदि वाष्पाकुलं चक्षुः सर्वतो हृतदर्शनम् ।
सुखं तन्मे परं यद्वां पश्यदेवैकमुत्तमम् ॥६०॥
प्रार्थ्यैकं दर्शनं नाथ त्वदीयं मनसेप्सितम् ।
अद्वितीयमिमं लोके मन्ये नानार्थसंयुतम् ॥६१॥
त्वत्प्राप्तिरेव लोकेऽस्मिंश्चिन्तासनास्ति मेऽनिशम् ।
त्वय्येवाधिगते नाथे प्रार्थये नापरं परम् ॥६२॥
कृत्वैव सकलां रात्रिं विषादं प्रातरेव सा ।
वायुं विज्ञापयामास ज्ञाताखण्डगतिं सदा ॥६३॥
त्वमेव जीवलोकेऽस्मिञ्जीवरूपेण जीविनाम् ।
अनादिनिधनो देवो भूतचक्रप्रवर्तकः ॥६४॥
त्वयैतत्सृज्यते विश्वं भवतैव हि धार्यते ।
तथा हि पाल्यते सर्वं त्यज्यतेऽन्ते स्वमायया ॥६५॥
त्वमेकः सर्वभूतानामुत्तमः सर्वगो महान् ।
सर्वदेवमयः सर्वपूजितः सर्वसिद्धिदः ॥६६॥
पूर्वमेव हि भूपालभद्रासनप्रतिष्ठितः ।
तथा तद्गतमुकुटदत्तपादाम्बुजो भवान् ॥६७॥
इति नुत्वैव प्रथमं पवनं लोकपावनम् ।
प्रश्रयावनता तत्र प्रोवाच नृपकन्यका ॥६८॥
विदितं त्वदृते नान्यः कार्यं मे साधयिष्यति ।
परोपकारकरणे विरला हि भवादृशः ॥६९॥

63 d °गति.    65 b धार्यते

वङ्कशोऽथ ददौ तस्मै सन्देशं पार्थिवात्मजा ।
अन्वेषणार्थमेवास्य दयितस्य मुदान्विता ॥७०॥
सकलेषु स मे कान्तः पुरग्रामाकरादिषु ।
वीक्षणीयः प्रयत्नेन भ्रमता सर्वतोदिशम् ॥७१॥
खुतनाख्यमितो गत्वा विषयं पश्य मे प्रियम् ।
श्येनाभिधाने सद्रूपनिधाने तं विलोकय ॥७२॥
सदालसगतिर्यत्र कुत्रापि स हि दृश्यते ।
मदर्थमनुनीयोऽसौ स्मृत्वेवेमां दशां मम ॥७३॥
कदाचित्सार्थमध्यस्थो दृश्यतेऽसौ प्रियो मम ।
अनन्यसदृशो लोके सर्वलक्षणलक्षितः ॥७४॥
तदन्तरात्तमेवैकं समानीय ममाग्रतः ।
सन्दर्शय सखे किं वा स एवासौ भविष्यति ॥७५॥
दृष्ट्वा तमद्भुतं तुष्टिं याति चेन्मानसं मम ।
तदाशाकुसुमं मन्ये प्रफुल्लं दैवयोगतः ॥७६॥
वृथा पूर्णाशया तद्वद्वाष्पाकुलविलोचना ।
शनैः शनैर्विवस्वन्तमुद्यन्तं विलोक्य सा ॥७७॥
दासीभिः संस्कृतां तावत्सुधर्मानवमां सभाम् ।
प्रविष्टानन्दिता बाला सखीमध्ये मुधाभवत् ॥७८॥
एतदेवाभवत्कार्यं प्रत्यहं हरिणीदृशः ।
तदीक्षणं तदालापस्तद्ध्यानं सर्वतस्तदा ॥७९॥
गृहे नैवाभवत्स्थातुं तच्चित्तं चिन्तयान्वितम् ।
सहसा सह सा ताभिर्निर्गता स्वगृहाद्बहिः ॥८०॥

क्षणमाक्रन्दनपरा क्षणमानन्दनिर्भरा ।
क्षणमुन्मत्तवद्बाला क्षणं चैतन्यसंयुता ॥ ८१ ॥
अमुञ्चन्नितरां बाला भृशोष्णां श्वाससन्ततिम् ।
सत्यं तत्स्पर्शतो भानुस्तीक्ष्णांशुत्वमुपागतः ॥ ८२ ॥
कदाचिदेव विरहहिमाक्तहृदम्बुजा ।
तथा तत्प्राप्तिसुरभिविकासितवपुर्लता ॥ ८३ ॥
विहाय राजपुत्री सा सर्वं गृहसुखादिकम् ।
तस्थौ नीलाभिधानां तां समाश्रित्य सरिद्वराम् ॥ ८४ ॥
नाविन्दत सुखं रात्रौ न दिवा वरवर्णिनी ।
तच्चिन्तनपरा नित्यं विरहाकुलमानसा ॥ ८५ ॥
मनस्तद्ध्याननिरतं चक्षुस्तद्दर्शनोत्सुकम् ।
तदर्थं सकलं कर्म तं विना वेद नापरम् ॥ ८६ ॥
परं तद्विरहोत्पन्नवैक्लव्यं सा यथागमत् ।
शक्यते न हि तद्वक्तुं तथा वर्षशतैरपि ॥ ८७ ॥
यद्विप्रयोगनिस्त्रिंशनिर्भिन्नं मानसं तदा ।
तत्सङ्गमौषधेनास्याः करोम्यद्यैव निर्व्रणम् ॥ ८८ ॥

इति वचनभाषापारङ्गमपण्डितश्रीवरविरचिते
कथाकौतुकेऽष्टमं कौतुकम् ॥

॥ ८ ॥

परं तु[1] कथयन्त्येवमितिहासं पुराविदः ।
नानोपाख्यानकुशलाः श्रुतसागरपारगाः ॥ १ ॥

---

1a om तु

दिने दिने वर्धमानो रूपेणाप्रतिमो भुवि ।
सत्यवाग्विजितक्रोधो दयावाञ्जनवल्लभः ॥२॥
सोऽपरेभ्योऽपि पुत्रेभ्यो योसोभाख्योऽतिबुद्धिमान् ।
प्रीतिं ततान विततां ततस्तातस्य तां तदा ॥३॥
सुखं तज्जनकस्तेन पुत्रेणैवान्वमन्यत ।
परं विहाय तनयानेकादश मनोरमान् ॥४॥
तमेवैकं समादाय सुतं सुरसुतोपमम् ।
याकोभनामधेयोऽसौ दिनान्यगमयत्सुखम् ॥५॥
तस्यैवं वर्तमानस्य याकोभस्य गृहाङ्गने ।
दिव्यानुभावस्सुमहानासीदेको वनस्पतिः ॥६॥
सर्वकामप्रदो नित्यं सदा पुष्पफलोदयः ।
सततं सेवितो देवैः कल्पवृक्षोपमो भुवि ॥७॥
भाति स्म विमला नित्यं यस्य पल्लवसन्ततिः ।
वक्तुं गुणगणं शम्भोर्जिह्वावलिरिवोत्तमा ॥८॥
महिमा पादपस्यायं ज्ञायते स्म यदा यदा ।
याकोभाख्यस्य तनयः शाखिकैकास्य तत्क्षणम् ॥९॥
ज्ञात्वा स्वमात्मजं किंचिद्यौवने निहितक्रमम् ।
तद्वल्लीतोमरं चारु करे तस्मै ददात्ययम् ॥१०॥
एकैकं स ददौ भूपः पुत्रेभ्यस्तोमरं शुभम् ।
प्रत्येकं तत्समुद्भूतं योसोभाख्यं विना सुतम् ॥११॥
तद्योग्यं नाभवत्तस्य प्रशस्तमपि तत्तदा ।
ज्ञातेऽप्यस्मिन्नवा वल्ली प्रादुर्भूतास्य शाखिनः ॥१२॥

समागत्यैकदा रात्रौ यशोभाख्योऽतिसुन्दरः ।
जनकस्यान्तिके वाक्यं प्रोवाच मधुरं शनैः ॥१३॥
तपस्तप्त्वा परं तात मदर्थं तोमरं शुभम् ।
स्वर्गाच्छीघ्रं समानीय दीयतां मे सुखावहम् ॥१४॥
आबाल्यादपि वह्नत्वं यावद्धस्तस्थमुत्तमम् ।
तदेव मे सदा स्वामिन्सर्वदुःखनिवारणम् ॥१५॥
यद्बलेनैव समरे सर्ववीरशिरोमणिः ।
अहमेको भविष्यामि लोके सोदरपूजितः ॥१६॥
इति पुत्रवचः श्रुत्वा तदर्थं बद्धनिश्चयः ।
तुष्टाव परमेशानं यशोभाख्यस्मुतप्रियः ॥१७॥
स तावज्जृम्भयेलाख्यो देवदूतस्समागतः ।
गृहीत्वा तोमरं दिव्यं निर्मितं विश्वकर्मणा ॥१८॥
तस्यायुधवरस्याथ प्रभावं स महामतिः ।
तदग्रेऽकथयत्सर्वं सर्वदर्शी जितेन्द्रियः ॥१९॥
न भयं जायते जातु दुष्टसत्त्वादिजं क्वचित् ।
दस्यवः शत्रवश्चैव पलायन्तेऽस्य दर्शनात् ॥२०॥
न बाधन्ते क्षुधा व्याधिर्नाधिर्नापि जरा तथा ।
स्तम्भभूतं दृढतरं विजेतद्राज्यसद्मनः ॥२१॥
इत्युक्त्वान्तर्हिते तस्मिन्देवदूते महात्मनि ।
तोमरं तत्समानीय ददौ तस्मै महीपतिः ॥२२॥
सोऽपि संप्राप्य तद्दिव्यं सर्वसिद्धिप्रदायकम् ।

---

21d om सप्त

दिने दिने वर्धमानो रूपेणाप्रतिमो भुवि ।
सत्यवाग्विजितक्रोधो दयावाञ्जनवल्लभः ॥२॥
सोऽपरेभ्योऽपि पुत्रेभ्यो योसोभाख्योऽतिबुद्धिमान् ।
प्रीतिं ततान विततां ततस्तातस्य तां तदा ॥३॥
सुखं तज्जनकस्तेन पुत्रेणैवान्वमन्यत ।
परं विहाय तनयानेकादश मनोरमान् ॥४॥
तमेवैकं समादाय सुतं सुरसुतोपमम् ।
याकोभनामधेयोऽसौ दिनान्यगमयत्सुखम् ॥५॥
तस्यैवं वर्तमानस्य याकोभस्य गृहाङ्गने ।
दिव्यानुभावस्सुमहानासीदेको वनस्पतिः ॥६॥
सर्वकामप्रदो नित्यं सदा पुष्पफलोदयः ।
सततं सेवितो देवैः कल्पवृक्षोपमो भुवि ॥७॥
भाति स्म विमला नित्यं यस्य पल्लवसन्ततिः ।
वक्तुं गुणगणां शम्भोर्जिह्वावलिरिवोत्तमा ॥८॥
महिमा पादपस्यायं ज्ञायते स्म यदा यदा ।
याकोभाख्यस्य तनयः शाखिकैकास्य तत्क्षणम् ॥९॥
ज्ञात्वा स्वमात्मजं किंचिद्यौवने निहितक्रमम् ।
तद्वल्लीतोमरं चारु करे तस्मै ददात्ययम् ॥१०॥
एकैकं स ददौ भूपः पुत्रेभ्यस्तोमरं शुभम् ।
प्रत्येकं तत्समुद्भूतं योसोभाख्यं विना सुतम् ॥११॥
तद्योग्यं नाभवत्तस्य प्रशस्तमपि तत्तदा ।
ज्ञातेऽप्यस्मिन्नवा वल्ली प्रादुर्भूतास्य शाखिनः ॥१२॥

समागत्यैकदा रात्रौ योसोभाख्योऽतिसुन्दरः ।
जनकस्यान्तिके वाक्यं प्रोवाच मधुरं शनैः ॥१३॥
तपस्तप्त्वा परं तात मदर्थं तोमरं शुभम् ।
स्वर्गाच्छीघ्रं समानीय दीयतां मे सुखावहम् ॥१४॥
आबाल्यादपि वृद्धत्वं यावद्धस्तस्थमुत्तमम् ।
तदेव मे सदा स्वामिन्सर्वदुःखनिवारणम् ॥१५॥
यद्बलेनैव समरे सर्ववीरशिरोमणिः ।
अहमेको भविष्यामि लोके सोदरपूजितः ॥१६॥
इति पुत्रवचः श्रुत्वा तदर्थं बद्धनिश्चयः ।
तुष्टाव परमेशानं याकोभाख्यस्सुतप्रियः ॥१७॥
स तावन्मृश्रयेलाख्यो देवदूतस्समागतः ।
गृहीत्वा तोमरं दिव्यं निर्मितं विश्वकर्मणा ॥१८॥
तस्यायुधवरस्याथ प्रभावं स महामतिः ।
तदग्रेऽकथयत्सर्वं सर्वदर्शी जितेन्द्रियः ॥१९॥
न भयं जायते जातु दुष्टसत्त्वादिजं क्वचित् ।
दस्यवः शत्रवश्चैव पलायन्तेऽस्य दर्शनात् ॥२०॥
न बाधन्ते क्षुधा व्याधिर्नाधिर्नापि जरा तथा ।
स्तम्भभूतं दधतं विद्योतद्राज्यसद्मनः ॥२१॥
स्त्युत्क्रान्तर्हिते तस्मिन्देवदूते महात्मनि ।
तोमरं तत्समानीय ददौ तस्मै महीपतिः ॥२२॥
सोऽपि संप्राप्य तद्दिव्यं सर्वसिद्धिप्रदायकम् ।

---

21d om सत्त

तदेव वैरिणां पदं निष्पिपेष महाबलः ॥२३॥
तद्दृष्ट्वा दुर्लभं सर्वे भ्रातरो बद्धमत्सराः ।
प्रतीक्षन्तो ऽपि तस्यासन्सभयं दुष्टचेतसः ॥२४॥
स च तत्स्नेहसंयुक्तः सर्ववैरविवर्जितः ।
भ्रातृणामात्मनो वापि विशेषं नान्वमन्यत ॥२५॥
धन्यास्ते जीवलोके ऽस्मिन्सज्जनास्सर्वतो ऽधराः ।
यद्धर्मवशतो लोकाद्भारं धारयितुं क्षमाः ॥२६॥
एकदा स महाबुद्धिर्निशीथे जनकान्तिके ।
स्थितो ऽपि निद्रासंसक्तमानसः समजायत ॥२७॥
जनको ऽपि तद्दृढस्नेहपाशेन यन्त्रितः ।
कान्तं तद्वदनं पश्यञ्जागरतत्परः ॥२८॥
निद्रायमेव योसोभनामधेयो ऽतिसुन्दरः ।
अकरोन्मधुरं हास्यं द्विवारं तं विमोहयन् ॥२९॥
प्रबुद्धो ऽसौ क्षणान्निद्रामनुभूय ततः परम् ।
अभूत्स्वप्ने ऽद्भुतं दृष्ट्वा विस्मयाविष्टमानसः ॥३०॥
तावत्पप्रच्छ तं बालं जनको विस्मयान्वितः ।
विहसितं किं त्वया स्वप्ने स्मितं किं दृष्टमद्भुतम् ॥३१॥
सो ऽप्युवाच ततस्तात मया स्वप्ने निरीक्षितम् ।
अद्भुतं नैव जानामि फलं किं तत्समुद्भवम् ॥३२॥
सुर्गादयो यक्षास्सर्वे सनक्षत्रास्सराशयः ।
चदाग्निपुत्रास्तात दृष्टा मत्प्रणतो मया ॥३३॥
बुध्याश्चोपतिपता तूष्णीं भव बालक मा पुनः ।

कथय स्वान्तिकं स्वप्नं कस्यापि वचनान्मम ॥ ३४ ॥
दृष्टमत्यद्भुतं स्वप्नं राज्यदं वैरिणस्तव ।
कदाचित्कथयन्त्येवमन्यथा तत्फलं भवेत् ॥ ३५ ॥
भवतोऽहर्निशं वैरपरा दुष्टमनोधियः ।
न सहन्ते पुनः स्वप्नफलं ते भ्रातरः परम् ॥ ३६ ॥
यथोक्तं वचनं तेन जनकेन क्षितीषिणा ।
कंचित्कालं तथैवासौ पालयामास बुद्धिमान् ॥ ३७ ॥
ततः कतिपयाहोभिर्गतं तत्प्रकटं पुनः ।
चतुःकर्णागतं वाक्यं स्वप्नकालेन भिद्यते ॥ ३८ ॥
कवयः कथयन्त्येवं यदीच्छा जीवितुं चिरम् ।
हस्ते न्यस्य स्वकं जातु दीयते न मनोवचः ॥ ३९ ॥
शुद्धं साधुवचोहंसं निर्गतं मुखपञ्जरात् ।
दुर्जनौतुस्तदा दीपनखाघातेन बाधते ॥ ४० ॥
गुप्तं श्रुत्वा जनोदीतं तत्स्वप्नार्थमितस्ततः ।
सर्वे ते समविन्दन्त भ्रातरो स्नेहतां पितुः ॥ ४१ ॥
किमथार्यो विचार्यैवमनार्यं कार्यमद्य नः ।
कथं सर्वाङ्गहृत्येकसुतस्नेहविमोहितः ॥ ४२ ॥
न जानीमः किमस्त्यस्य जनकस्याद्य मानसे ।
कथं न वेत्ति प्रेमान्धो दुःखमस्मद्वियोगजम् ॥ ४३ ॥
परं किं वा तपस्तात घोसोभाग्येन दुष्करम् ।
यद्वशेन पिता नैव क्षणमेकं जहात्यमुम् ॥ ४४ ॥
तत्स्नेहेन जराजीर्णशरीरो वपुषो व्ययम् ।

कथमस्मद्गुरुस्तम्भस्तम्भितोऽपि न वेत्त्ययम् ॥४५॥
अथवा जीवलोकेऽस्मिन्वासना पूर्वकर्मजा ।
अनिवार्याग्रतो याति सुखदुःखानुबन्धिनी ॥४६॥
किं वार्यं मोहितो धात्रा मायाजवनिकां पराम् ।
प्रक्षिप्येक्षणयोस्तेन नेक्षते ऽसौ शुभाशुभम् ॥४७॥
बुद्धिर्वृद्धस्य याता किं गृहीत्वायं शिशुं स्वयम् ।
यत्तद्धात्यधुना मोहादस्मान्राज्यपुरन्धरान् ॥४८॥
नैकोऽयं राज्यभागी स्याद्वयमप्यंशभागिनः ।
कथं तमेव सत्पुत्रं मन्यते न पिता परान् ॥४९॥
एवं चिन्तातुरास्सर्वे कथयन्तः परस्परम् ।
तत्प्रीतिखण्डनोपायसमासक्तधियोऽभवन् ॥५०॥
ते तु दुष्टधियः सर्वे पप्रच्छुस्तादृशान्परान् ।
कथं प्रेमानयोः क्षिप्रं द्वयोस्स्यात्खण्डितं परम् ॥५१॥
निपुणस्य यदा कार्यं कठिनं संपतिष्यति ।
परबुद्धिबलं ग्राह्यं तदा तत्कर्मसिद्धये ॥५२॥
यद्यप्येकेन दीपेन प्रकाशो न गृहान्तरे ।
भवेत्तमोविनाशार्थं कल्पनीयास्तदा परे ॥५३॥
समाहूयात्मनस्तावत्सुहृत्सम्बन्धिबान्धवान् ।
सदाधर्मपरान्हिंसाक्रोधादिगुणसंयुतान् ॥५४॥
कृत्वैकदा सभां तस्यां निषण्णास्ते महौजसः ।
प्रोचुः पृथक्पृथक्सर्वे वचनं वैरतत्पराः ॥५५॥
तेषामेकोऽवदद्वाक्यं कठिनं पापसंयुतम् ।

जाने श्रेयस्करं नैतद्वधकार्यं विनापरम् ॥५६॥
सुतं भूमौ निधायामुमितो नीत्वा वनान्तरम् ।
वैरिचिन्ताविनिर्मुक्ता गतबाधास्तदा वयम् ॥५७॥
इति श्रुत्वा वचस्तस्य निर्घृणस्यापरोऽवदत् ।
अपराधं विना बालघातोऽदुःखाय देहिनाम् ॥५८॥
अथवामुं शिशुं बुद्ध्वा करिष्यामोऽश्वसादिनम् ।
प्रकृतोऽसौ ततोऽप्येनं पतितं मारयिष्यति ॥५९॥
वयं शङ्कास्पदं नैव न तथा दोषभागिनः ।
इत्याकर्ण्याब्रवीत्तावदपरोऽपि विचक्षणः ॥६०॥
यद्वधं क्रियतेऽस्माभिर्वधोपायः शिशौ पुनः ।
तदेव सुमहत्पापं सैव निन्दापि किं फलम् ॥६१॥
कार्यमेवाधुना कार्यं परं जनकपुत्रयोः ।
यथानयोर्वियोगः प्रेमातिशयशालिनोः ॥६२॥
गृध्रगोमायुसंकीर्णं यक्षोरगसमाकुलम् ।
पानीयपादपलतातृणगुल्मविवर्जितम् ॥६३॥
सुकुमारममुं घोरं दूरं नीत्वा वनान्तरम् ।
बालोऽयं त्यज्यते तत्र किं वधेन प्रयोजनम् ॥६४॥
तदायमबलो बालः क्षुत्पिपासोपपीडितः ।
एकाकी विजने तस्मिन्स्वयं यात्येव पञ्चताम् ॥६५॥
तद्गात्रनिपतन्निघ्नस्रवद्रुधिररागतः ।
भवतां मलिनं मा भूच्छस्त्रं परमनिर्मलम् ॥६६॥
समाकर्ण्याथ तद्वाक्यं परं बुद्धिबलोर्जितः ।

अपरोऽप्यवदत्तेषां प्राप्तकालमिदं वचः ॥६७॥
परं वधोऽस्य शस्त्रेण क्षणमेकं सुदुःखदः ।
मरणं क्षुत्पिपासाभ्यां मा भूत्कस्यापि जातु चित् ॥६८॥
एतावदुक्त्वा विरते तस्मिन्मतिमतां वरे ।
प्रोवाच शनकैर्वाक्यमन्योऽप्येको दयान्वितः ॥६९॥
कूपमेकं निरीक्षध्वमितो दूरेऽन्तिकेऽपि वा ।
प्रक्षिप्यैनं शिशुं तत्र सुखं स्यात्परमेव नः ॥७०॥
तत्रस्थं दैवयोगेन संप्राप्तोऽपि पिपासितः ।
जलाभिलाषी सार्थस्तं समुद्धरति कूपतः ॥७१॥
ततस्सार्थपतिर्लब्ध्वा शिशुमेनं दयान्वितः ।
दासभावं सुतत्वं वा नयतीति विनिश्चयः ॥७२॥
दासतां सार्थपतिना नीतेऽप्यस्मिन्पितुस्ततः ।
भवेद्राज्यादिकं सर्वमस्माकं हस्तसंश्रयम् ॥७३॥
इति ब्रुवैव ते सर्वे प्रहर्षोत्फुल्ललोचनाः ।
वचनं साध्वमन्यन्त तत्कार्यावद्धमानसाः ॥७४॥
एतदेव दृढं मन्त्रं कृत्वा सर्वेऽथ सोदराः ।
सुहृदस्तान्समामन्त्र्य प्रययुस्स्वं स्वमालयम् ॥७५॥
धन्यास्ते मानवा येषां द्वयं चित्ते न जायते ।
ममता यौवनोद्भूतो मदोऽपि च सुदुस्सहः ॥७६॥
विरला जीवलोकेऽस्मिन्युरुपास्समदृष्टयः ।
लोभक्रोधविनिर्मुक्ताश्शिवध्यानपरायणाः ॥७७॥

---

६७d °पक्रे.

दुर्लभा मनुजास्सर्वे स्वप्नमायोपमं जगत् ।
मन्यमानास्सदा योगनिपुणाः शेरते सुखम् ॥७८॥
हिताहितकृतेकार्यविवेचनपरायणाः ।
सामान्यास्ते क्षितौ किंचिल्लोभादिवशवर्तिनः ॥७९॥
परमाहंकृतियुता वैरान्धधिषणास्सदा ।
अवरास्ते नरा भूमौ दारभूता विशेषतः ॥८०॥
अन्येऽप्युभ्रातरस्सर्वे मिलित्वा जनकान्तिकम् ।
उपाजग्मुस्समारब्धमन्त्रसाधनतत्पराः ॥८१॥
विधाय प्रणतिं तस्मै प्रश्रयानतमस्तकाः ।
जानुभ्यामवनिं गत्वा माययोचुः शुभां गिरम् ॥८२॥
विज्ञप्तिं शृणु तातात्र सदैव गृहवर्तिनाम् ।
अस्माकमस्ति राजेन्द्र मृगयारसिकं मनः ॥८३॥
योसोभाख्यममुं बालं भ्रातरं प्राणसम्मतम् ।
गृहीत्वाद्य वयं धामस्त्वदाज्ञाकाङ्क्षिणो वयम् ॥८४॥
दर्शयामोऽस्य सकलं वनं तृणलताकुलम् ।
मृगपक्षिगणाकीर्णं नानापादपशोभितम् ॥८५॥
क्वचिदंसे समारोप्य क्वचिद्वाहेऽथ कुञ्जरे ।
सुकुमारममुं बालं पर्यटामो वनान्तरम् ॥८६॥
कृनिष्यामो वहूंस्तत्र हरिणाञ्शशकांस्तथा ।
शिक्षिताप्यस्त्रविद्येयं सफला मनुजेश्वर ॥८७॥
विधायात्यद्भुतां लीलां दर्शयित्वास्य तद्वनम् ।

81c उपाजग्म°.

शीघ्रमेवागमिष्यामः कुरुष्वाज्ञां नरोत्तम ॥ ८८॥
इति तेषां वचः श्रुत्वा प्रत्युवाच नराधिपः ।
तद्वियोगासहिष्णुस्तच्चिन्तयोद्विग्नमानसः ॥ ८९॥
कर्तुमाखेटकं सर्वे भवन्तो बलशालिनः ।
प्रयान्तु किं तु बालोऽयं कोमलाङ्गो न वेत्ति तत् ॥ ९०॥
सम्भवन्ति वने दोषा बहुशो दुष्टसत्त्वजाः ।
सोढुं तद्दर्शनोद्भूतं न शक्तो बालको भयम् ॥ ९१॥
अथवा सुकुमाराङ्गं सुतमेतं विना क्षणम् ।
सुन्दरं भवसर्वस्वं स्थातुं नैव धृतिर्मम ॥ ९२॥
समाकर्ण्याथ तद्वाक्यं विमर्शाकुलिताशयाः ।
बद्धाञ्जलिपुटास्सर्वे जगदुस्ते शनैश्शनैः ॥ ९३॥
नावन्नास्य भयं किंचित्सिंहव्याघ्रादितः क्वचित् ।
भवामो जीविता यावन्न शङ्कां कर्तुमर्हसि ॥ ९४॥
चकाराज्ञां नृपः कर्तुं मृगयां पुत्रवत्सलः ।
योऽसौभाग्येन तेनैव सहैव सरलाशयः ॥ ९५॥
अनुज्ञां प्राप्य ते दुष्टधियो कुष्टाशयाः परम् ।
सम्पन्नमिव मन्त्रं तममन्यन्त पुरा कृतम् ॥ ९६॥

इति यवनभाषापारङ्गमपण्डितश्रीवरविरचिते
कथाकौतुके नवमं कौतुकम् ॥

॥ १ ॥

धिग्दैवं कृपणं कर्तुं दयं यो नैव शक्तिमान् ।
दुःखितं सुखसंयुक्तं सुखितं च सदा दुःखम् ॥ १॥

वैदग्ध्यं किं विधेः कूपे प्रक्षिप्यैवातिसुन्दरम् ।
योसौभाग्यं सुखेनास्य भ्रातरो येन योजिताः ॥२॥
ततस्तदाशयादाय भ्रातरं तं यवीयसम ।
कर्तुमाखेटकं सर्वे निर्ययुर्नगराद्वहिः ॥३॥
लालयन्तोऽपि भूपाग्रे बालं बलवतां वराः ।
यथाबलमतो राजा बलात्कारं न वेत्त्ययम ॥४॥
कश्चिदंसं समारोप्य तमेव प्रियदर्शनम् ।
अविज्ञाताशयं तेषां गन्तुकामोऽभवत्तदा ॥५॥
कश्चिदेनं समालिङ्ग्य चुचुम्ब वदनं शनैः ।
पश्यतो जनकस्याग्रे वितन्वंस्तां मुदं मुधा ॥६॥
प्रकटं स्नेहसंयुक्ता अन्तः क्रोधपरायणाः ।
जय जीवेति बहुशः प्रयुञ्जानास्सदाशिषः ॥७॥
एवं मायामयैर्भावैर्मोहयित्वा जनाधिपम् ।
निन्युस्ते दूरमध्वानं निर्जनं दुर्जनाः परम ॥८॥
ततः स्कन्धादवारोह्य पदातिं विरचय्य तम ।
स्नेहार्द्रं हृदयं त्यक्त्वा दुर्वचोभिस्संमर्दयन् ॥९॥
तीक्ष्णकण्टकिना दुष्टमार्गेण बद्धमत्सराः ।
पद्भ्यां पद्मोपमाभ्यां तमानिन्युर्वैरिणस्ततः ॥१०॥
मुष्टिभिः पादघातैस्तं ताडयन्तो मुहुर्मुहुः ।
रुदन्तं दीननयनं हसन्तस्ते मुदान्विताः ॥११॥
मत्तस्नेहार्द्रहृदयः परं ते कठिनाशयाः ।
प्रश्रयावनतो बालस्ते हि वैरपरायणाः ॥१२॥

छ्याग्य ते स पिता येन वत्सेद्यान्धधिया परम् ।
त्वामेवैकं समाश्रित्य वयं विस्मारितास्सदा ॥१३॥
त्वामन्वैव हनिष्यामः पितुर्भीतिर्न वास्ति नः ।
करिष्यामोऽथवा छिन्नहस्तपादादिकं क्रुधा ॥१४॥
एवं सन्तर्जयन्तस्तं सुकुमारमनागसम् ।
आसन्प्रमुदितास्सर्वे मोहिता विष्णुमायया ॥१५॥
इति दृष्ट्वाद्भुतं तेषां मनःकाठिन्यमातुरः ।
चिन्तयामास योसोभनामधेयोऽतिदुःखितः ॥१६॥
अहितं विहितं कस्माद्विधिनाविधिना मम ।
संहितं निहितं किं वा सौहार्दं सुहृदां परम् ॥१७॥
स दूरे जनको येन रक्षितोऽहं सुमेधसा ।
यत्नेनाद्य सुदुःखार्तः शरणं कं समाश्रये ॥१८॥
कथं स मे पिता दूरस्थितो जानाति दुर्दशाम् ।
नास्ति कश्चित्सुहृद्भवा वक्ष्यत्येवं तदग्रतः ॥१९॥
नास्ति स मे बन्धुरिति श्रुतं वाक्यं दाता श्रुतौ ।
विपरीतं तु तज्जन्मां हन्तुकामास्सहोदराः ॥२०॥
एवं दुःखातुरं बालं रुदन्तं करुणस्वरम् ।
तमादाय समाजग्मुः कूपान्तिकमनागसम् ॥२१॥
चक्षुरन्ति स्म तं कूपमन्धकूपमिवापरम् ।
सुनिम्नमप्रमेयं च पातालतलमाश्रितम् ॥२२॥
घोरं मध्योच्छलद्वायुजितमेघध्वनिं परम् ।

---

20b om. दाता.

सदा गुल्मलताकीर्णं प्रसर्पत्सर्पसंकुलम् ॥२३॥
ततो दृढतरं बद्ध्वा बन्धनैस्तं नृपात्मजम् ।
अंशुकानि समाहृत्य सन्तुष्टास्तत्र चिक्षिपुः ॥२४॥
स तु तत्तेजसा कूपः प्रज्ज्वाल समन्ततः ।
निरालोकेऽपि सन्दर्शस्तत्प्रकाशोऽभवत्तदा ॥२५॥
तेजस्तेजस्विनां जातु कुत्रचिन्नैव रुध्यते ।
उद्यन्तं विवस्वन्तं बाधते किं निशातमः ॥२६॥
तस्मिन्क्षणे महेशानमगतीनां गतिं परम् ।
सोऽथ सस्मार यौगीभनामधेयोऽतिकातरः ॥२७॥
पिता माता सुहृद्भ्राता न चान्ये बन्धवो यदा ।
समर्था रक्षितुं नाथ तदानाथेश्वरो भवान् ॥२८॥
ततस्सर्वेश्वरः शम्भुः प्रसन्नजनवत्सलः ।
विधायैकं शिलापट्टं तन्मध्ये मायया विभुः ॥२९॥
अरक्षत्सहसालोक्य पतन्तं तं निराश्रयम् ।
अप्रमेयानुभावोऽसौ कर्तुं किं नैव शक्तिमान् ॥३०॥
तेनैव प्रेषितस्तावद्द्वीविकं सुकञ्चुकम् ।
पूर्वोक्तो देवदूतोऽसौ समागत्याब्रवीद्वचः ॥३१॥
उत्तिष्ठोत्तिष्ठ भद्रं ते बद्धेदं देवकञ्चुकम् ।
मृत्युभीतिः क्षुधा तृष्णा न हि त्वां बाधते क्वचित् ॥३२॥
मुञ्च मुञ्चाधुना चिन्तां प्रसन्नस्ते महेश्वरः ।
रक्षितोऽसि स्वयं तेन दीनानुग्रहकारिणा ॥३३॥
यथेदं सुमहद्दुःखं त्वयात्तं दुष्टयोगतः ।

तथाल्पैरेव दिवसैः सुखं प्राप्स्यसि शाश्वतम् ॥३४॥
धीरो भव महाबुद्धे दैन्यं मा नय मानसम् ।
जित्वा शत्रून्स्वधर्मेण राजावश्यं भविष्यसि ॥३५॥
इत्युक्त्वान्तर्हिते तस्मिन्देवदूते स बुद्धिमान् ।
ध्यायन्मनसि देवेशं तस्थौ तत्र नृपात्मजः ॥३६॥
दिवसत्रितयं सोऽभूत्कूपेऽस्मिंल्लोकचन्द्रमाः ।
नापभाख्ये पुरे रम्ये यथा ब्रह्मा विनिर्मितः ॥३७॥
चतुर्थेऽहनि भूपालनयनानन्दकारकः ।
ततस्समुद्धृतो बालः प्रभुणाद्भुतकारिणा ॥३८॥
दैवाज्ञयाथ तद्भाग्यवशेनापि समागतः ।
जलार्थी लोकसार्थस्तं कूपमन्वेषयंस्ततः ॥३९॥
सार्थो विस्मृतमार्गोऽसौ क्षुत्पिपासोपपीडितः ।
बभ्राम विपिने तस्मिन्विचिन्वंस्तमितस्ततः ॥४०॥
तावत्स संगतस्तस्य प्रथितो वरुणाख्यया ।
खेत्राभिधानस्तेनासौ समानीतस्तदन्तिकम् ॥४१॥
स तेन सहितो यावत्कूपान्तिकमुपागमत् ।
तावन्नृपात्मजस्यापि देवदूतस्समागतः ॥४२॥
ततो जगाद शनकैरुत्तिष्ठोत्तिष्ठ भारत ।
भाग्यं ते फलितं साधो त्यज चिन्तां सुदुःखजाम् ॥४३॥
अद्यैव तृषितस्सार्थस्समागच्छति जीवनम् ।
वनं चर्मपुटं क्षिप्त्वा समुद्धरति कूपतः ॥४४॥
तदन्तरे त्वया स्थेयं तूर्णं वरत्रासंयुतम् ।

ततोऽसौ ते समुद्धर्ता ज्ञात्वा पूर्णं जलेन तत् ॥४५॥
अभिधाय गते तस्मिन्यथास्थानं नृपात्मजः ।
प्रतीक्षमाणस्समयमासीद्बद्धमनोरथः ॥ ४६ ॥
क्षिप्तं चर्मपुटं तावज्जलोद्धरणवाञ्छया ।
केनापि सार्थिकेनासौ न्यविशत्तत्र सत्वरम् ॥४७॥
नितरां गुरु तज्ज्ञात्वा स सार्थानचरस्तदा ।
विस्मयाविष्टहृदयः शनकैर्वाक्यमब्रवीत् ॥ ४८ ॥
अस्ति चर्मपुटं भारयुतं किमपि साम्प्रतम् ।
तदेतन्मध्यगं किं चिद्दुर्लभं वस्तु मन्यते ॥४९॥
एवमानन्दितः कर्षञ्शनैस्तत्कूपतस्ततः ।
शिशुमेकं ददर्शासौ रूपातिशयशालिनम् ॥ ५० ॥
कूपसन्तमसात्तेन विधिना कर्षितः शनैः ।
स शिशुः शुशुभे कुम्भस्थितो बालशशी यथा ॥५१॥
अद्भुतं बालकं तूर्णं संतुष्टः सोऽपि सेवकः ।
समानीयार्पयत्सार्थपतयेऽदर्शयत्ततः ॥ ५२ ॥
समालोक्याथ तं बालं सोऽभूत्परमविस्मितः ।
तथैव सार्थलोकौघो विमर्शमकरोत्परम् ॥५३॥
कोऽयं कस्यात्मजः कूपे केन वायं निपातितः ।
इति कोलाहलपरः स सार्थोऽभूत्समन्ततः ॥५४॥
तस्य ते भ्रातरस्तावन्मृगयानिरता वने ।
श्रुत्वा ध्वनिं पुनर्घोरं कूपान्तिकमुपागताः ॥५५॥

---

47c सार्थनासौ.

दृष्ट्वातिविपुलं सार्थं तं च कूपात्समुद्धृतम् ।
स्तुवन्तो विधिवैचित्र्यं तत्रासंस्ते सुविस्मिताः ॥५६॥
प्रोचुः सार्थपतिं क्रुद्धाः कूपात्केनायमुद्धृतः ।
अस्माभिर्निहितोऽप्यत्र वध्यः पापरतः परम् ॥५७॥
स तान्सार्थेश्वरो भीतः पप्रच्छ विनयान्वितः ।
भवद्भिरपराधेन केन क्षिप्तोऽत्र बालकः ॥५८॥
प्रत्यूचुस्ते महात्मानं मायिनो नृपनन्दनाः ।
अस्माकमासीद्दासोऽयं दासाज्ञाभङ्गकारकः ॥५९॥
तेनायमपराधेन क्षिप्तोऽस्मिन्सुसंकटे ।
अस्माभिर्भवताकार्यं विहितं यत्समुद्धृतः ॥६०॥
वधोपायः सदास्माभिः क्रुधास्मै विहितः क्वचित् ।
फलितो न कथं वध्यः स हि यो दैवरक्षितः ॥६१॥
हनिष्यामोऽद्य चेद्दोषाहतकं किं फलं ततः ।
विक्रीतुमस्त्वमुं दासं साभिलाषं मनोऽद्य नः ॥६२॥
इति सार्थपतिः श्रुत्वा कुमारं तं सुलोचनम् ।
क्रीत्वा तेभ्योऽल्पवित्तेन चक्रे स्वात्मवशं ततः ॥६३॥
तदर्थं स तु यात्रोभनामा वेत्ति स्म नापरः ।
आसीद्दिकैव सा योग्या ग्रहीतुं तं नृपात्मजा ॥६४॥
गृह्णीविवाहुतं दासं शुभलक्षणसंयुतम् ।
ततस्सार्थपतिर्मेने प्रत्यागाद्धर्मपूरितः ॥६५॥
ततः कतिपयाहोभिः प्राप्तस्तु नगरान्तिकम् ।
श्रिया परमया युक्तः प्रविवेशसार्थनायकः ॥६६॥

तद्वृत्तं समाकर्ण्य मन्त्री मेरुमहीभुजा ।
सभाजनाय प्रहितस्तत्समीपमुपागतः ॥ ६७ ॥
सभाजयित्वा तं सार्थपतिं तदनुगांस्तदा ।
तेनैव सहितोऽन्नमेरुरोऽसौ न्यविशत्पुरम् ॥ ६८ ॥
यप्रच्छानामयन्सार्थनाथं मित्रं यथा सुहृत् ।
दिष्ट्याद्य कुशली प्राप्तः परं प्रेमनिधिर्भवान् ॥ ६९ ॥
कथयस्व सखे वस्तु किमत्रापहृतं त्वया ।
भवतस्तन्मया सर्वं गृह्यते साध्वसाधु वा ॥ ७० ॥
तस्य तद्वचनं श्रुत्वा प्राह सार्थपतिस्ततः ।
मयानीतानि दिव्यानि रत्नान्यन्यनेकशः ॥ ७१ ॥
तथाप्येको मया दासः क्रीतोऽतिविपुलैर्धनैः ।
रूपेणाप्रतिमो लोके लोकनाथसमाहृतः ॥ ७२ ॥
यद्रूपेण जितः कामं स कामोऽनङ्गतां गतः ।
परं तमेकं मन्येऽहं नररत्नं नराधिप ॥ ७३ ॥
न तथा जायते प्रीतिर्निधिलाभेन देहिनाम् ।
कलकोकिलनादेन न शारदसुधांशुना ॥ ७४ ॥
असमञ्जसवाक्येन शिशोर्मृगमदेन च ।
नापि स्वर्गाधिपत्येन दर्शनेनास्य सा यथा ॥ ७५ ॥
तन्मुग्धमधुरालापस्मितसाचीक्षणादिभिः ।
तेनेदं मोहितं सर्वं कुहकेनेव मायया ॥ ७६ ॥
एकस्यैव तदीयस्य चञ्चन्नेत्रेक्षणस्य च ।

---

69a यप्रच्छानामयं.

अचला सकला मूल्यं स्वल्पं भूपाल मन्यते ॥७७॥
इति श्रुत्वाद्भुतं सम्यक्तस्य रूपनिरूपणम् ।
तच्चित्तोऽज्ञेनमेसस्तं विससर्ज निजालयम् ॥७८॥
समेत्यायतनं सार्थपतिर्भृत्यं महामतिः ।
क्रीतं स्वद्रविणैर्नीतं प्रोवाच वचनं ततः ॥७९॥
अभ्युत्तिष्ठ महाभाग परं स्नानादिकर्मणा ।
नय शोभां शरीरं त्वं सत्वरं धूलिधूसरम् ॥८०॥
ततो नीलाभिधानां तां नदीमेत्यावगाहयन् ।
प्रसादयामास वपुस्स कुमारस्तदाज्ञया ॥८१॥
किं तु नीरजहीनापि तन्मुखाम्भोजशोभया ।
परं तदैव शुशुभे सापगा वेगशालिनी ॥८२॥
तेनावगाहिता शुद्धवपुषा भ्रमताम्भसि ।
राजहंसोपमेनापि राजपुत्रेण सा बभौ ॥८३॥
अवगाह्य ततः कृत्वा नीरात्तीरमुपागतः ।
दिव्याम्बरधरो रेजे स कुमारोऽतिशोभनः ॥८४॥
शरीरं भूषयित्वा तु सत्वरं भूषणोत्तमैः ।
समागत्य ततस्सार्थपतये प्रणनाम सः ॥८५॥
सोऽप्यमुं सुन्दरतरं समालोक्य मनो दधे ।
गृहीतं स्वल्पवित्तेन विक्रीतुं बहुभिर्धनैः ॥८६॥
अथ सार्थपतिस्सम्यग्व्यवहारविचक्षणः ।
मञ्चे निधाय तं मेसभूपान्तिकमुपानयत् ॥८७॥
सोऽपि तं तेन रूपेण तस्मै नीत्वान्तिकं पुनः ।

तस्मादाकृष्य तस्यैवं तस्मिंल्लोके शुभं वपुः ॥ ८८ ॥
दर्शयामास मेधावी स्वार्थसाधनतत्परः ।
प्रश्रयावनतो भूत्वा रूपेणाप्रतिमं भुवि ॥ ८९ ॥
पृथुकं निर्गतं मञ्चात्परं तेजोऽन्वितं शुभम् ।
अमन्यत महीपालो द्वितीयमिव भास्करम् ॥ ९० ॥
दृष्ट्वैव तं तथारूपं प्रियमद्भुतदर्शनम् ।
आसन्प्रमुदितास्सर्वे विस्मयाविष्टमानसाः ॥ ९१ ॥
तावत्सर्वं चरित्रं तत्सुरूपस्य सुजन्मनः ।
तस्यैव तज्जनोद्गीतं प्रादुर्भूतं समन्ततः ॥ ९२ ॥
तन्नामतद्गुणाख्यानतत्कथाबद्धमानसाः ।
तन्मयत्वमवापन्ना आसंस्तत्पुरवासिनः ॥ ९३ ॥
आलेख्येऽपि लिखित्वामुं केचित्पश्यन्त उत्तमम् ।
ध्यानेनान्ये मनोमध्ये तदाक्षिप्तधियः परम् ॥ ९४ ॥

इति यवनशास्त्रपारङ्गमपण्डितश्रीवरविरचिते
कथाकौतुके दशमं कौतुकम् ॥

॥ १० ॥

कर्तुं यन्न क्वाचिच्छक्तास्सर्वे देवास्सवासवाः ।
विधाता संविधाता तद्धेलयैव निरङ्कुशः ॥ १ ॥
एवं वृत्तं समावृत्तं यावत्तस्य शिशोर्महत् ।
तत्कर्मण्यनभिज्ञासीत्तावत्सा पार्थिवात्मजा ॥ २ ॥
तद्वियोगेन सा बाला त्यक्तवस्त्रा मनोरमा ।
नित्यमुन्मत्तरूपासीद्भ्रमतीव वनाद्वनम् ॥ ३ ॥

एकदागत्य भूपालतनया नगरान्तिकम् ।
यावत्प्रविष्टा शुश्राव महत्कोलाहलं नृणाम् ॥४॥
ततो विस्मयमापन्ना हरिणीहारिलोचना ।
किमेतदिति पप्रच्छ सखीवृन्दं मुहुर्मुहुः ॥५॥
काचित्तदाज्ञया तूर्णं गता प्राणाधिका परम् ।
प्रष्टुं तदखिलं वृत्तं श्रुत्वा याता पुनस्ततः ॥६॥
समेत्य कथयामास यथावत्सर्वमादितः ।
दासी दासचरित्रं तन्मनस्सन्तोषकारकम् ॥७॥
समाकर्ण्यैव किं नाम किंचिल्लब्धसुखावला ।
व्यसृजत्तं समानेतुं शिशुं सहचरीं पुनः ॥८॥
समानीय ततो बालं तमेकं प्रियदर्शनम् ।
अपश्यत्सा स्वयं कान्तं मध्ये कर्णरथस्थिता ॥९॥
तं विलोक्य ततोऽपूर्वरूपलावण्यशालिनम् ।
बभूवानन्दिता भूपतनया तत्क्षणात्परम् ॥१०॥
तद्दर्शनाद्वियोगोत्थं मानिनी विजहौ शुचम् ।
अमन्यत तदैवैकं सफलं जन्मवासरम् ॥११॥
चित्तं चैतन्यसंयुक्तं ज्ञात्वा चिन्तापराभवत् ।
शुभाशुभफलावाप्तिसाक्षिभूतं नृणां मनः ॥१२॥
किं वा सोऽयं मया दृष्टः स्वप्ने यो लोकसुन्दरः ।
तं विना दयितं स्वास्थ्यं मनो मे कथमाप्नुयात् ॥१३॥
क्षणमेकं विमृश्यैवमत्यजच्छ्वाससन्ततिम् ।
नवोद्भूतवियोगेव निस्संज्ञा सापतद्भुवि ॥१४॥

तावत्सार्थपतिर्भृत्यं निनाय निजमन्दिरम् ।
दर्शयित्वेव तद्रूपाद्गतचित्तं पुरीकसाम् ॥१५॥
ततोऽपश्यद्विशालाक्षीं धात्री राजसुतां शनैः ।
दशामपूर्वदृष्टां तामवलोक्याकुलाशया ॥१६॥
अहो किंचित्क्षणं सौख्यमद्यैवाधिगतं त्वया ।
दर्शनाद्बालकस्यास्य तावन्मूर्छामुपागता ॥१७॥
किं शोकाम्बुधिमग्नासि वद सुन्दरि सत्वरम् ।
इति तस्या वचः श्रुत्वा प्रत्यवोचन्मनस्विनी ॥१८॥
जाने ऽहानि गतान्येवं मातर्दुःखमयान्यपि ।
अधुनानन्दयुक्तानि प्रतिभान्त्येव तानि मे ॥१९॥
यो ऽयं सार्थपतेर्दासो मेत्रे ऽस्मिन्वीक्षितस्त्वया ।
जीवितेशो मया स्वप्ने स एवालोकितः पुरा ॥२०॥
नित्यमेतद्वियोगाग्निज्वालया ज्वलितास्म्यहम् ।
विद्धमुं भवसर्वस्वं मम मातस्सुदुर्लभम् ॥२१॥
दर्शयित्वा निजं रूपं तदा लोकमनोरमम् ।
हृतं चैतन्यमखिलं केलयैव ममाधुना ॥२२॥
न जाने माययानेन कयाप्युन्मत्तरूपताम् ।
नीता मां सर्वबन्धुभ्यः कथं दूरीकृताप्यहम् ॥२३॥
यत्किंचित्सततं कार्यं मम मातर्निरीक्षितम् ।
एतदर्थं मया सर्वं तदासं प्रेमलुब्धया ॥२४॥
अवेहि परमं लाभं वाञ्छितं सर्वथाधुना ।
यदि सर्वगुणोपेतः प्राप्यते ऽयं सुरूपवान् ॥२५॥

नैतज्जाने कथं कार्यं मम सिद्धिमुपैष्यति ।
लभ्यते वा कथं नाथो यातोऽसौ दृष्टिगोचरम् ॥२६॥
धन्या का जीवलोकेऽस्मिन्या नित्यं सुमनोरमम् ।
अमुमासाद्य रमणं रमत्येव सुमध्यमा ॥२७॥
नैतज्जानाम्यहं मातः प्राप्तपुण्योदयाधुना ।
का वा सुलोचना रम्यं विशत्येतस्तनान्तरम् ॥२८॥
धन्या का तन्मुखं नित्यं मदालसविलोचनम् ।
पश्यन्बिम्बाधरं जन्म नयत्येव कृतार्थताम् ॥२९॥
धन्या का कामिनी सौधे शीतांशुकरशीतले ।
अनेन परमं सौख्यं समाप्नोति सदाधुना ॥३०॥
इति ब्रुवाणां तां बालां विरहोत्कण्ठिताशयाम् ।
प्रत्युवाच शनैर्धात्री मानयन्नथ मानिनीम् ॥३१॥
क्षमस्वाद्य पुनः पुत्रि कंचित्कालं यथाधुना ।
अनायासेन सिध्यन्ति क्षमाशीलस्य सिद्धयः ॥३२॥
क्षमया लभ्यते सर्वं यत्किंचिन्मनसोप्सितम् ।
नित्यं प्रमुदितो लोकः क्षमावानुन्नताशयः ॥३३॥
सहनान्नापरं किंचिद्भूषणं भुवि भाविनाम् ।
क्षमया पूजिता लोके तथैवोदेति भास्करः ॥३४॥
सुश्रोणि स्वर्गनिश्श्रेणिः कविभिस्सैव कीर्तिता ।
तस्मात्त्वयापि क्षन्तव्यं सुभ्रु मद्वचनाद्विधिः ।
अनयैवाखिलं कार्यं सत्वरं साधयिष्यति ॥३५॥
इति तद्वचनं श्रुत्वा राजपुत्री मुदान्विता ।

मन्यमानाविशच्चेदं दयितं त्वत्तसंश्रयम् ॥३६॥
स एव समयः पूज्यो वरं तानि दिनान्यपि ।
यत्रानन्दी सुहृन्मित्रसामीप्येन सदा भवेत् ॥३७॥
प्रियप्रेमप्रदीपोऽसौ यदि प्रज्वलितस्सदा ।
विप्रयोगतमो नैव बाधते नयनं क्वचित् ॥३८॥
ग्रन्येऽयुस्य सार्थेशः समानीयापणान्तरे ।
विक्रयार्थं ततो दासं मल्लार्घं तस्य चाकरोत् ॥३९॥
ततो वृत्तं समाकर्ण्य सर्वे ते पुरवासिनः ।
धनान्यादाय तं दासं ग्रक्रीतुं तूर्णमाययुः ॥४०॥
श्रुतमत्यद्भुतं वृत्तं समाने पुरवासिनाम् ।
नगरविशेषापि परं कुब्जाकारातिदुर्लभा ॥४१॥
योषिद्धापि तत्रैका तद्गुणावर्जिताशया ।
दासं क्रीतुमनुप्राप्ता गृहीत्वा सूत्रवर्तिकाम् ॥४२॥
मयायं गृह्यते दास इत्युक्तेऽपि तया जनान् ।
हसतः प्रत्युवाचेदं सा वृद्धा गद्गदाक्षरम् ॥४३॥
मल्लार्घं प्रथितं लोके क्रीतुं नैव क्षमास्म्यहम् ।
ग्रयमेव हि मे लाभो यत्क्रीतुमुपागता ॥४४॥
तावत्सार्थपतिस्तस्य पुरग्रामकरादिषु ।
दुन्दुभिं ताडयामास विक्रयार्थं सुजन्मनः ॥४५॥
यः कश्चिद्धनवान्दासं क्रीतुकामो भवेदमुम् ।
स हि गृह्णातु त्वरितं समागत्यातिसुन्दरम् ॥४६॥
न क्रेतात्सदृशः कश्चित्सकले लोकमण्डले ।

समभूद्वविता ह्रपसम्पदा सुमनोहरः ॥४७॥
श्रुत्वा दुन्दुभिनादं तं सदा मानधनोर्जिताः ।
महाजनास्समाजग्मुः क्रीतुं दासं तमद्भुतम् ॥४८॥
तेषामेको ऽवदन्मूल्यं भद्रमेकं प्रदीयते ।
मयास्मै तेन दासो ऽयं गृह्यते लोकसुन्दरः ॥४९॥
भद्रं तत्कथितं नूनं यत्र संख्याविचक्षणैः ।
सहस्रमेकं सौवर्णमुद्राणां परिकीर्तितम् ॥५०॥
तावता स वणिक्तज्ञो नैव मूल्येन दत्तवान् ।
उत्तमार्घं तदा दासं ह्रपातिशयशालिनम् ॥५१॥
ततस्तद्द्विगुणं मूल्यमपरो ऽपि ददौ वणिक् ।
नाङ्गीचकार तत्किंचित्स्वार्थसाधनतत्परः ॥५२॥
एवं तत्त्रिगुणं कश्चिददात्कश्चिच्चतुर्गुणम् ।
एवं कृत्वा शतगुणं तन्मूल्यमभवत्तदा ॥५३॥
सहस्रकोटिगुणितं वृद्धिं मूल्यमुपागमत ।
तावतापि न तं दासं दत्तवान्स वणिक्पतिः ॥५४॥
अथ नागरिकास्सर्वे सह मेरुमहीभुजा ।
तदा हित्वा तदाशां तां विविशुस्स्वं स्वमालयम् ॥५५॥
एवं वृत्तं समाकर्ण्य मेरुभूपालमन्त्रिणः ।
दयिताधिगतार्थाभूदेकैव वरवर्णिनी ॥५३॥
हित्वा चिरन्तनां चिन्तां तन्निदेशवशं सदा ।
दर्पणाज्जिन्मेरुं तं समाहूयाब्रवीद्वचः ॥५७॥
गत्वा शीघ्रं महीभर्तुस्समीपं विनयान्वितः ।

दत्त्वा जानुद्वयं भूमौ विज्ञप्तिं कुरु सत्वरम् ॥५८॥
निष्प्रजोऽहमसौ भूयात्पुत्रो मे तव सेवकः ।
इत्याज्ञा यदि ते दासो गृह्यते वणिजो मया ॥५९॥
अनुज्ञां प्राप्य भूभर्तुस्तदा सार्थपतिं वद ।
उत्तमार्घो मया दासो गृह्यते भवतोऽधुना ॥६०॥
यावत्प्रार्थयिता मूल्यं स वणिक्स्वार्थतत्परः ।
तावदेव प्रदातव्यं द्विगुणं वापि सत्वरम् ॥६१॥
वित्तचिन्ता न कर्तव्या कोशेऽस्मिन्नव मामके ।
सन्ति रत्नान्यसंख्यानि यथा तारा नभस्तले ॥६२॥
यथाहं दयिता तेऽस्मि भवान्प्रियहितैः स्तुतः ।
मम चित्तविनोदार्थं दासं तं शीघ्रमानय ॥६३॥
प्राप्तेऽमुष्मिन्मया दासे मनस्सन्तोषकारके ।
सफलं मन्यते जन्म चिन्ताविरहितं तदा ॥६४॥
तथेति प्रतिश्रुत्यासौ सन्देशं हरिणीदृशः ।
तद्भाषणासन्तुष्टस्सर्वं चक्रे समाहितः ॥६५॥
अथ सार्थपतेर्दासं गृहीत्वा विपुलैर्धनैः ।
शुभ्रुवोऽग्रे समानीय स्थापयामास सुन्दरम् ॥६६॥
तं तु कार्णायनं वीक्ष्य प्राप्तकामा मनस्विनी ।
सर्वालङ्कारपूर्णाली विमर्शनकरोत्ततः ॥६७॥
अहो किं स्वप्नमायेयं किं वा सत्यमिदं भवेत् ।
यत्पश्याम्यधुना लोके दुर्लभं प्रियदर्शनम् ॥६८॥

५९. निजो    ६३. ईशा-

आशा मन्मानसे नैवमासीद्विरहयामिनी ।
प्राप्नोति दीर्घतां याता प्रियमित्रोदयं क्वचित् ॥६९॥
अकस्मात्सुखिता कान्तप्राप्त्या जातास्मि साम्प्रतम् ।
शोभते विधिना साम्यं कर्तुं चेन्मानसं मम ॥७०॥
मां विना नापरा काचिद्दुःखिता संसृतौ पुरा ।
अधुना सुखसंयुता प्राप्तकामापि कामिनी ॥७१॥
चिन्तातीक्ष्णांशुसन्तप्ते विप्रयोगमरुस्थले ।
पिपासिताप्यहं तत्र भ्रमन्ती गतचेतना ॥७२॥
आश्चर्यकारिणा नित्यं कृततृष्णा दयालुना ।
प्रियप्राप्तिसुधावृष्ट्या दिष्ट्याद्य विधिना कृता ॥७३॥
निर्जनेऽपि निरालोके स्थितया पथि साम्प्रतम् ।
दैवं भाग्योदयेनापि प्राप्तं ज्योतिर्मया परम् ॥७४॥
मृत्युशय्यां समाश्रित्य जाताहं निद्रिता भृशम् ।
न जाने केन पुण्येन पुनर्दैवेन बोधिता ॥७५॥
जीयात्सार्थपतिर्भूयात्तथा लाभान्वितस्सदा ।
विक्रयार्थमिहानीतो दासोऽयं येन रूपवान् ॥७६॥
का क्षतिश्चेन्मया दासो विक्रीतो बहुभिर्धनैः ।
वित्तं तद्धनिनां प्रोक्तं यत्स्वात्मार्थं प्रयुज्यते ॥७७॥
स्वान्तं सततं रागलीनं चिन्तादिकं परम् ।
शरीरं द्रविणं सर्वं प्रियार्थं भुवि रागिणाम् ॥७८॥
धिक्तांल्लोभान्धधिषणान्निन्द्याञ्जगति मानवान् ।
धनमेव प्रियं येषां न सुहृत्प्रीतिभाजनम् ॥७९॥

एवं विस्मयमापन्ना दर्पोत्फुल्लविलोचना ।
अमन्यत परं सौख्यं तदा सा नृपकन्यका ॥८०॥
प्रीत्येव तन्मुखाम्भोजं पश्यन्मुरूरूपागमत् ।
मूर्छां तत्सङ्गमाह्लादलब्धसंज्ञानवत्क्वचित् ॥८१॥
यथाविन्दत सा बाला तद्वियोगातुरा परम् ।
सततं चिन्तयंपिता क्षणमेकं युगोपमम् ॥८२॥
तथा संप्राप्य दयितं कान्तं कमललोचनम् ।
निमेषमिव दर्पेण वर्षं भूपसुता तदा ॥८३॥
विश्वं मायामयैर्भावैर्मोहयन्यो विभात्यजः ।
तस्मै नवनवाश्चर्यनिधये विधये नमः ॥८४॥

इति यवनभाषापारङ्गमपण्डितश्रीवरविरचिते
कथाकौतुके एकादशं कौतुकम् ॥

॥१२॥

नोदेति रागिणां रागो दर्शनेनैव केवलम् ।
किं वयं जायते पुंसां श्रवणेनैव कुत्रचित् ॥१॥
श्रुतिरन्ध्रेण सद्रूपकथा यदि समागता ।
मनस्स्वास्थ्यं तनुर्बलं तदैवोत्कण्ठया हरेत् ॥२॥
न कान्यत्कर्म जानाति श्रवणं श्रवणं विना ।
श्रुत्वैव शुभवृत्तान्तं हृदयोद्वेगकारकम् ॥३॥
समयेऽस्मिन्नभूदेका कन्या देवान्वयंशजा ।
सुकुमाराङ्गवक्राङ्गी देशे तस्मिन्सुविश्रुता ॥४॥

82b मरा   84d विजे

तन्वी पूर्णेन्दुनयना नवयौवनशालिनी ।
मुक्तानुकारदशना पक्वबिम्बाधरा तथा ॥५॥
मध्ये क्षामा स्तनानम्रा सन्त्रस्तहरिणीक्षणा ।
श्रोणिभारालसगतिर्निम्ननाभिर्मनोहरा ॥६॥
आसीच्छीलगुणौदार्ययुता परमसुन्दरी ।
कामं कामपताकेव भाविनी भुवि भामिनी ॥७॥
नित्यं सौधस्थिता बाला सवयोभिस्समन्विता ।
नापश्यदात्मनस्तुल्यं कंचिद्रूपादिभिर्गुणैः ॥८॥
समाकर्ण्याथ तद्वृत्तं जनोद्गीतं समन्ततः ।
सापि तं द्रष्टुकामाभूदुत्कण्ठाकुलिताशया ॥९॥
स्थानेऽद्भुतं श्रुतं किंचित्स्तुतं सद्भिर्मुहुर्मुहुः ।
तदेव सहसा द्रष्टुमुत्कण्ठयति मानसम् ॥१०॥
भूषयित्वा तदात्मानं भूषणैः प्रमदोत्तमा ।
परमर्द्धियुता मेन्ढमाययौ तं निरीक्षितुम् ॥११॥
सर्वे ग्रहीतुकामास्तामासन्मेसरवासिनः ।
नित्यं तद्रूपलावण्यसमावर्जितमानसाः ॥१२॥
सहस्रमेकमश्वानां तथाश्वतरदन्तिनाम् ।
प्रवालमणिमुक्ताभिः काञ्चनेनापि पूरितम् ॥१३॥
प्राप्ता तत्र समादाय द्रव्येणाप्रतिमं भुवि ।
योसोभनामधेयं तं क्रीतुकामापि साभवत् ॥१४॥
नराणामथ नारीणां तदागमनकारणात् ।
सर्वत्र नगरे जातः पुनः कोलाहलो महान् ॥१५॥

यप्रच्छागत्य तद्वार्तां लोकौघं वरवर्णिनी ।
क्रीयते स वणिग्दासः कुतोऽयमिति कथ्यताम् ॥ १६ ॥
सम्प्रतिकाधुना हित्वा सर्वं बन्धुजनादिकम् ।
श्रिया परमया युक्ता तद्रूपोत्कण्ठिताप्यहम् ॥ १७ ॥
यावत्तं द्रष्टुकामाभूद्बाला समुपागता ।
यथा तेन जनेनासौ सोऽयमित्येव दर्शितः ॥ १८ ॥
अथ तं प्रथमं वीक्ष्य कान्तं कमललोचनम् ।
अनन्यसदृशं लोके रूपेणासीत्सुविस्मिता ॥ १९ ॥
मूर्छितेवापतद्भूमौ तमपूर्वं विलोक्य सा ।
लब्धसंज्ञाथ शनकैः प्रोवाच मधुराक्षरम् ॥ २० ॥
जाने जन्मसहस्राणि विधाय विधिवत्तपः ।
विधिना निर्मितो नूनं जयन्तो नामविश्रुतः ॥ २१ ॥
विक्रमेणास्य तनयः कथं दासत्वमाप्नुयात् ॥ २२ ॥
यद्यन्यद्देवसम्भूतो भवान्देवसुतः कथम् ।
सर्वसौख्ययुतां भूमौ नाकं हित्वावतिष्ठते ॥ २३ ॥
यदि गन्धर्वतनयः सोऽपि गेयप्रियस्तदा ।
गीर्वाण वचोऽप्येवं वदनाच्छ्रूयते न ते ॥ २४ ॥
मन्ये मनीषया हित्वा विधात्रा तत्त्वपञ्चकम् ।
शरीरं तरुणेनैव रचितं केवलेन ते ॥ २५ ॥
अथवा येन तपसा समाराध्य महेश्वरम् ।
त्वयासनुत्तमं रूपं येनेदं मोहितं जगत् ॥ २६ ॥

---

25b हित्वा

